मावंवर्त्तिपृथिवीसमुषाऽसमुसूर्य्यः समुविश्वमिदञ्जगत् ॥ वैश्वा
नुरज्ज्योतिर्भूयासंविभून्कामान्व्यश्नवैभूःस्वाहा ॥ २३ ॥
[ १० ] अुभ्यादधामि । सुमिधुमग्नेव्रतपतुेत्वयि ॥ व्रतञ्चश्रुद्धा
ञ्चोपैमीन्धेत्वादीक्षितोऽअुहम् ॥ २४ ॥ यत्रुब्रह्मंच ॥ क्षुत्रञ्चसु
म्म्यञ्चौचरंतःसुह ॥ तल्लोकम्पुण्ण्युम्प्रज्ञेषंय्यत्रदेवाऽसुहाग्निना ॥
॥ २५ ॥ यत्रेन्द्रः ॥ यत्रेन्द्रश्चवायुश्चसुम्म्यञ्चौचरंतःसुह ॥ तँ
ल्लोकम्पुण्ण्युम्प्रज्ञेषंय्यत्रसेदिर्न्नविद्यत ॥ २६ ॥ अंशुनाते ॥ ऽअंशुः
पृच्च्यताम्परुषापरुः ॥ गन्धस्तेसोममवतुमदायुरसोऽअच्च्यु

तꣳ ॥२७॥ सिुश्चान्तिुपारिं । षिश्चुन्त्युत्तिसश्चान्तिपुनान्तिच ॥ सुरांयै
वुब्भ्रैमदैंकिुन्त्वोब्वंदतिकिुन्त्वः ॥ २८ ॥ धुानावंन्तङ्करुम्भिणंम् ॥
धुानावंन्तङ्करुम्भिणंमपूपवंन्तमुक्थिनंम् ॥ इन्द्रंप्प्रुातज्जुंषस्वनꣳ ॥
॥ २९ ॥ बृहदिन्द्रांय । गायतुमरुंतोवृत्रुहन्तंमम् ॥ येनुज्ज्योतिुर
जंनयन्नृतुावृधोंदुेवन्देवायुजागृंवि ॥ ३० ॥ अद्ध्वर्य्योऽअद्रिभिꣳ ॥
सुतꣳसोमंम्पुवित्त्रुऽआनंय ॥ पुनुाहीन्द्रांयुपातंवे ॥ ३१ ॥ [८] योभू
तानाम् ॥ योभूतानुामधिपतिुर्य्यस्म्मिँल्लोकाऽअधिंश्रुताः ॥ यऽई
शेमहुतोमुहाँस्त्तेनंगृह्णामिुत्त्वामुहम्मयिंगृह्णामिुत्त्वामुहम् ॥ ३२ ॥

उपयामगृहीतोस्यश्श्विभ्यान्त्वासरस्वत्यैत्त्वेन्द्रायत्त्वासुत्राम्म्णं
ऽएषतेयोनिरश्श्विभ्यान्त्वासरस्वत्यैत्त्वेन्द्रायत्त्वासुत्राम्म्णे ॥३३॥
प्राणपामे । ऽअपानपाश्चक्षुष्पाश्श्रोत्रपाश्चमे ॥ वाचोमेवि
श्वभेषजोमनसोसिविलायकः ॥ ३४ ॥ अश्श्विनकृतस्यते ॥ अ
श्श्विनकृतस्यतेसरस्वतिकृतस्येन्द्रेणसुत्राम्म्णाकृतस्य ॥ उपहूतऽ
उपहूतस्यभक्षयामि ॥ ३५ ॥ [४] समिद्धऽइन्द्रः ॥ समिद्धऽइन्द्रऽउ
षसामनीकेपुरोरुचापूर्वकृद्वावृधानः ॥ त्रिभिर्देवैस्त्रिꣳशतावज्रबाहु
र्ज्जघानवृत्रंविदुरोववार ॥ ३६ ॥ नराशꣳसꣳप्प्रति ॥ नराशꣳसꣳ

प्प्रतिशूरोमिमांनुस्त्तनूनपात्त्प्रतिंयुज्ञस्युधार्म ॥ गोभिर्व्वपावान्मधु
नासमुञ्जन्हिरंण्यैश्च्चुन्द्रीयंजतिप्प्रचेताः ॥ ३७ ॥ ईडितोदेवैः ॥
ईडितोदेवैर्हरिवाँऽअभिष्टिराजुह्वानोहविषाशर्द्धमानः ॥ पुरन्दरो
गोत्त्रभिद्वज्ज्रबाहुरायांतुयुज्ञमुपंनोजुषाणः ॥ ३८ ॥ जुषाणोबर्हिः ॥
जुषाणोबर्हिर्हरिवान्नुऽइन्द्रंः प्प्राचीनंᳬसीदत्त्प्रदिशांपृथिव्याः ॥ उरु
प्प्रथाःप्प्रथमानᳬस्योनमादित्त्यैरुक्तंवसुभिःसुजोषाः ॥ ३९ ॥ इ
न्द्रन्दुरः ॥ कवुष्यौधावमानावृषांणंय्यन्तुजनंयःसुपत्त्नीः ॥ द्वारों
देवीरुभितोविश्श्रंयन्ताᳬसुवीरांव्वीरम्प्रथमानामहोभिः ॥ ४० ॥ उ

वृहतीबृहन्तुम्पयंस्वतीसुदुघेशूरमिन्द्रम् ॥ तन्तु पासुनक्का । बृहतीबृहन्तुम्पर्यस्वतीसुदुघेशूरमिन्द्रम् ॥ तन्तु
न्तुत्तम्पेशंसासुंवयन्तीदेवानान्देवंय्यजतऽसुरुक्मे ॥ ४१ ॥ दैव्यामि
मांना । मनुषऽपुरुत्राहोतांराविन्द्रंम्प्रथमासुवाचा ॥ मूर्द्धन्यज्ञ
स्युमधुनादधानाप्प्राचीनुञ्ज्योतिर्हुविषांवृधातऽ ॥ ४२ ॥ तिस्रोदे
वीः ॥ तिस्रोदेवीर्हुविषावर्द्धमानाऽइन्द्रञ्जुषाणाजनयोनपत्त्नीः ॥ अ
च्छिन्नुन्तन्तुंपर्यसासरस्वतीडादेवीभारतीविश्वतूर्त्तिः ॥४३॥ त्वष्टा
दधत ॥ त्वष्टादधच्छुष्ममुमिन्द्रायवृष्णेपाकोचिष्टुर्य्युशसेपुरूणि ॥
वृषायजुन्वृषणम्भूरिरेतामूर्द्धन्युज्ञस्युसमनक्तुदेवान् ॥ ४४ ॥ वन

स्पतिरवंसृहङ्गं ॥ वनुस्पतिरवंसृहद्दोनपाशैस्त्मन्यासमुअन्छांसिता
नदेवः ॥ इन्द्रंस्यहृद्दयैर्जुठरम्पृणानःस्वदांतियुज्ञम्मधुनाघृतेनं ॥
॥ ४५ ॥ स्तोकानामिन्दुम् ॥ स्तोकानामिन्दुम्प्रतिशूरऽइन्द्रोवृषा
यमाणोवृषभस्तुराषाट् ॥ घृतप्रुषामनसामोदमानाऽस्वाहांदेवाऽ
अमृतामादयन्ताम् ॥ ४६ ॥ [ ११ ] आयांतु ॥ आयात्त्विन्द्रोव
सऽउपनऽइहस्तुतःसंधमादंस्तुशूरं÷ ॥ वावृधानस्तविषीर्यस्यपूर्वी
द्यौर्न्नक्षत्रमभिभूतिपुष्यात् ॥ ४७ ॥ आनं÷ ॥ आनऽइन्द्रोदूरादा
नऽआसादभिष्टिकृदवंसेयासदुग्ग्रः ॥ ओजिष्ठेभिर्नृपतिर्वज्रबाहुःसु

ङ्गेसुमत्त्सुंतुर्वणि॑ःपृतुन्यून् ॥ ४८ ॥ आनं॑ः ॥ आनुऽइन्द्रोहारिंभिर्य्याः
त्त्वच्छांवांचुनोवंसुराधंसेच ॥ तिष्ठांतिवृज्जीमुघवांविरप्पशीमंय्युज्ञ
मनुंनुोवाजंसातौ ॥ ४९ ॥ त्रातारुमिन्द्रम् ॥ त्रातारुमिन्द्रमवितां
रुमिन्द्रुᳮहवेहवेसुहवुᳮशूरमिन्द्रम् ॥ ह्वयांमिशुक्रम्पुरुहूतमिन्द्रंᳯ
स्वुस्तिनोंमुघवांधात्त्विन्द्रः॑ ॥ ५० ॥ इन्द्रः॑सुत्रामां ॥ इन्द्रः॑सुत्रा
मास्ववाँ२ं ॥ ऽअवोंभिःसुमृडीकोभंवतुविश्श्ववेदाः ॥ बाधंतान्द्वेषो
ऽअभंयङ्कृणोतुसुवीर्य्यस्यपतंयःस्याम ॥ ५१ ॥ तस्यंवुयम् ॥ त
स्यंवुयᳮसुंमतौयुज्ञियस्यापिंभुद्रेसौमनुसेस्यांम॥सस्सुत्रामास्ववाँ२ं ॥

ऽइन्द्रोऽअस्मेऽआराच्चिद्द्वेषंःसनुतर्युयोतु ॥ ५२ ॥ आमन्द्रैः ॥
आमन्द्रैरिन्द्रहरिभिर्य्याहिमयूररोमभिः ॥ मात्वाकेचिन्नियमन्विन्न
पाशिनोतिधन्वेवताँ२ ॥ ऽइहि ॥ ५३ ॥ एवेत् ॥ एवेदिन्द्रंवृषणंवज्ज्र
बाहुंवसिष्ठासोऽअभ्यर्च्चन्त्यर्कैः ॥ सनस्तुतोव्वीरवद्धातुगोमद्यूयम्पा
तस्वस्तिभिःसदानः ॥ ५४ ॥ [ ८ ] समिद्धोऽअग्निः ॥ समिद्धो
ऽअग्निरश्विनातप्तोघर्म्मोव्विराट्सुतः ॥ दुहेधेनुःसरस्वतीसोमꣳशु
क्रमिहेन्द्रियम् ॥ ५५ ॥ तनूपाभिषजा । सुतेश्विनोभासरस्व
ती ॥ मध्वारजाꣳसीन्द्रियमिन्द्रायपथिभिर्व्वहान् ॥ ५६ ॥ इन्द्रायेन्दु

म् ॥ इन्द्रायेन्दुꣳसरस्वतीनराशꣳसेननग्नहुम् ॥ अधातामश्विना मधुभेषजम्भिषजासुते ॥ ५७ ॥ आजुह्वानासरस्वतीन्द्रायेन्द्रिया णिवीर्य्यम् ॥ इडाभिरश्विनाविषꣳसमूर्ज्जꣳसꣳरयिन्दधुः ॥ ५८ ॥ अश्विनानमुचेः । सुतꣳसोमꣳशुक्रम्परिस्रुता ॥ सरस्वतीतमा भरद्बर्हिषेन्द्रायपातवे ॥ ५९ ॥ कवष्यो न । व्यचस्वतीरश्वि भ्यान्नदुरोदिशः ॥ इन्द्रोनरोदसीऽउभेदुहेकामान्त्सरस्वती ॥ ॥ ६० ॥ उषासानक्तम ॥ उषासानक्तमश्विनादिवेन्द्रꣳसायमिन्द्रि यैः ॥ सञ्जानानेसुपेशसासमञ्जातेसरस्वत्त्या ॥ ६१ ॥ पातन्नः ॥

पातन्नोऽअश्विनादिवांपाहिनक्कुंᳬसरस्वति ॥ दैव्यांहोताराभिषजा
पातमिन्द्रुᳬसचांसुते ॥ ६२ ॥ तिस्रस्त्रेधा । सरंस्वत्त्यश्विनाभा
रतीडां ॥ तीव्रम्पंरिस्रुतासोममिन्द्रांयसुषुवुम्मदम् ॥ ६३ ॥ अ
श्विनांभेषुजम् ॥ अश्विनांभेषजम्मधुंभेषुजन्नुःसरंस्वतीं ॥ इन्द्रे
त्वष्टायशुःश्रियर्ᳬरूपᳬरूपमधुःसुते ॥ ६४ ॥ ऋतुथेन्द्रं ॥ ऋतुथे
न्द्रोवनुस्पतिंःशशमानःपरिस्रुतां ॥ कीलालंमश्विभ्यांम्मधुंदुहेधे
नुःसरंस्वती ॥ ६५ ॥ गोभिर्न्न । सोमंमश्विनामासरेणपरिस्रुतां ॥
समंधातुᳬसरंस्वत्त्यास्वाहेन्द्रेसुतम्मधुं ॥ ६६ ॥ [ १२ ] अश्वि

नांहुविंः ॥ अुश्विनांहुविरिन्द्रियन्नमुचेर्द्धियासरंस्वती ॥ आशुक्र मांसुराद्वसुंमुघमिन्द्रांयजभ्रिरे ॥ ६७ ॥ यमुश्विनां ॥ यमुश्वि नुासरंस्वतीहुविषेन्द्रमवंर्द्धयन् ॥ सबिंभेदवुलम्मुघन्नमुंचावासुरेस चां ॥ ६८ ॥ तमिन्द्रंम् ॥ तमिन्द्रंम्पुशवुंःसचाश्विनुोभासरंस्वती ॥ दधांनाऽअुभ्यनूषतहुविषांयुज्ञऽइन्द्रियैः ॥ ६९ ॥ यऽइन्द्रें ॥ यऽइन्द्रऽइन्द्रियन्दुधुःसंवितावरुंणोभगंः ॥ ससुत्रामांहुविष्पंतिर्य्यं जंमानायसश्चत ॥ ७० ॥ सुवितावरुंणः ॥ सुवितावरुंणोदधुद्यज मानायदुाशुषें ॥ आदंत्तनमुंचेर्व्वसुंसुत्रामुाबलंमिन्द्रियम् ॥ ७१ ॥

वरुंणंक्षुत्रम् ॥ वरुंणंक्षुत्रमिन्द्रियम्भगेनसविताश्रियम् ॥ सुत्रामा
यशंसाबलन्दधांनायुज्ञमांशत ॥ ७२ ॥ अश्विनागोभिं÷ ॥ अश्वि
नागोभिरिन्द्रियमश्वेभिर्वीर्य्यम्बलम् ॥ हविषेन्द्रꣳसरंस्वतीयज
मानमवर्द्धयन् ॥ ७३ ॥ तानासंत्त्या । सुपेशंसाहिरंण्यवर्त्तनीन
रां ॥ सरंस्वतीहविष्मतीन्द्रकर्म्मंसुनोवत ॥ ७४ ॥ ताभिषजां ।
सुकर्म्मणासासुदुघासरंस्वती ॥ सवृंत्रहाशतक्रंतुरिन्द्रायदधुरिन्द्रि
यम् ॥ ७५ ॥ युवꣳसुरामंम् ॥ युवꣳसुरामंमश्विनानमुंचावासुरेस
चां ॥ विपिपानाꣳसंरस्वतीन्द्रङ्कर्म्मंस्वावत ॥ ७६ ॥ पुत्रमिवपितरौ॥

पुत्रमिवपितरांवुश्विनोभेन्द्रावथुःकाव्यैर्दुःसनांभिः ॥ यत्त्सुरामुं
व्यपिंवुःशचींभिःसरंस्वतीत्त्वामघवन्नभिष्णक ॥ ७७ ॥ यस्म्मिन्न
श्वांसः ॥ यस्म्मिन्नश्वांसऽऋषुभासंऽउुक्षणांवुशामेषाऽअंवसृष्टास
ऽआहुंताः ॥ कीलालुपेसोमंपृष्ठायवेधसेंहृदामुतिञ्जनयुचारुमुग्ग्नयें ॥
॥ ७८ ॥ अहाव्यग्ने । हुविरुास्येतेस्त्रुचीवघृतञ्चुम्म्वीवुसोमंः ॥ वृा
जुसनिंरुयिमुस्म्मेसुुवीरम्प्रशुस्तन्धेहियुशसंम्बृहन्तंम् ॥ ७९ ॥
[ १३ ] ॥ शतम् ॥ १२०० ॥ अश्विनातेजसुाचक्षुःप्प्राणेनुसरंस्वती
वीर्य्यम् ॥ वृाचेन्द्रोवलेनेन्द्रायदधुरिन्द्रियम् ॥ ८० ॥ गोमंदूषुणास

त्त्या ॥ गोमदृषुणांसुत्त्याश्वांवद्यातमश्विना ॥ वुर्तीरुद्रानृपाय्यम्
॥ ८१ ॥ नयत् ॥ नयत्त्परोनान्तरऽआदुधर्षद्दृषण्वसू॥दुंशर्दिसोम
त्त्योरिपुः ॥ ८२ ॥ तानः ॥ तानुऽआवोढमश्विनारुयिम्पुशङ्गंसन्दृ
शम् ॥ धिष्ण्यांवरिवोविदम् ॥ ८३ ॥ पावुकानः ॥ पावुकानुंसर
स्वतीवाजेभिर्वाजिनीवति ॥ युज्ञंवष्टुधियावसुः ॥ ८४ ॥ चोदयित्री
सूनृतानाम् ॥ चोदयित्रीसूनृतानाञ्चेतन्तीसुमतीनाम् ॥ युज्ञन्दधे
सरस्वती ॥ ८५ ॥ मुहोऽअर्णः ॥ मुहोऽअर्णुंसरस्वतीप्प्रचेतय
तिकेतुना ॥ धियोविश्वाविराजति ॥ ८६ ॥ इन्द्रायाहि । चित्रभा

नोसुताऽइमेत्त्वायवं÷ ॥ अण्वींभिस्त्तनांपूतासं÷ ॥ ८७ ॥ इन्द्रायां हि । धियेषितोव्विप्प्रंजूतऽसुतावंतऽ ॥ उपब्ब्रह्मांणिव्वाघत्तं÷ ॥ ८८ ॥ इन्द्रायांहि॥इन्द्रायांहितूतुंजानुऽउपब्ब्रह्मांणिहरिवः ॥ सुतेदंधिष्ष्व नुस्च्चनं÷ ॥९९॥ अुश्श्विनांपिबताम् ॥ अुश्श्विनांपिबताम्ममधुसरंस्व त्त्यासुजोषंसा ॥ इन्द्रं÷सुत्रामांवृत्त्रहाजुषन्तांꣳसोम्म्यम्मधुं ॥९०॥ [ ११ ] इति वाजसनेयशुक्लयजुस्संहितापाठेविंशोऽध्यायः ॥ २० ॥



इयं वाजसनेयसंहितापूर्वार्द्धं मुम्बय्यां क्षेमराज-श्रीकृष्णदास
श्रेष्ठिना स्वकीये " श्रीवेङ्कटेश्वर " ( स्टीम् )-मुद्रणालये
मुद्रयित्वा प्रकाशितम्। संवत् १९६७, शके १८३२.

श्रीगणेशाय नमः ॥ हरिः३ॐम् ॥ इमम्मेसमिद्धोअग्निरेकादशकौ
वसंतेनऋतुनाषड्ढोतायक्षत्त्समीधाग्निंद्वादशाश्विनौछागस्यसप्तदेवंब
र्हिश्चतुर्दशषडेकषष्टिः ॥ ॐ इमम्मेवरुणश्श्रुधीहवमुद्याचंमृडय ॥
त्वामवस्युराचके ॥ १ ॥ तत्त्वां । यामिब्रह्मणावन्दमानस्त्तदाशा
स्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोद्ध्युरुशꣳसमानऽआ
युःप्प्रमोषीः ॥ २ ॥ त्वन्नः ॥ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहे
डोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसि
प्प्रमुमुग्ध्यस्मत् ॥ ३ ॥ सत्त्वम् ॥ सत्त्वन्नोऽअग्नेवमोभवोतीने

दिष्ठोऽअस्याऽउषसोव्युष्टौ ॥अवयक्ष्वनोवरुणꣳरराणोवीहिमृडीक
ꣳसुहवोनऽएधि ॥ ४ ॥ महीमूषु । मातरꣳसुव्रतानामृतस्यपत्नी
मवसेहुवेम ॥ तुविक्षत्रामजरन्तीमुरूचीꣳसुशर्म्माणमदितिꣳसुप्र
णीतिम् ॥ ५ ॥ सुत्रामाणम्पृथिवीम् ॥ सुत्रामाणम्पृथिवीन्द्यामने
हसꣳसुशर्म्माणमदितिꣳसुप्रणीतिम् ॥ दैवीन्नावꣳस्वरित्रामनाग
समस्रवन्तीमारुहेमास्वस्तये ॥ ६ ॥ सुनावमारुहेयम् ॥ सुनावमा
रुहेयमस्रवन्तीमनागसम् ॥ शतारित्राꣳस्वस्तये ॥ ७ ॥ आनः ॥
आनोमित्रावरुणाघृतैर्गव्यूतिमुक्षतम् ॥ मद्ध्वारजाꣳसिसुक्रतू ॥

॥ ८ ॥ प्रवाहवां। सिसृतश्रीवसैनुऽआनोगव्यूंतिमुक्षतङ्कतेनं ॥ आ
मुाजनैश्श्रवयतंयुवानाश्श्रुतम्मैंमित्रावरुणाहवेमा ॥ ९ ॥ शन्नं ॥
शन्नौभवन्तुवाजिनोहवैषुदेवतांतामितद्रवंऽस्वर्काः ॥ जम्भयुन्तोहिंवृ
कर्ठरक्षांर्ठसिसनैम्स्युस्म्मद्युंयवुन्नमींवाः ॥ १०॥ वाजेवाजेवत ॥ वा
जिनोनोधनेषुविप्पाऽअमृताऽऋतज्ञाः ॥ अस्यमध्वंःपिवतमादयध्वं
न्तृप्ताय्यातपथिभिर्देवयानैः ॥११॥ समिद्धोऽअग्निः । समिधासुसं
मिद्धोवरेण्यः ॥ गायत्रीच्छन्दऽइन्द्रियन्त्र्यविर्गौर्वयोदधुः ॥ १२ ॥
तनूनपाच्छुचिंव्रतः ॥ तनूनपाच्छुचिव्रतस्तनूपाश्चसरस्वती ॥ उ

ष्णिहाच्छन्दऽइन्द्रियन्दित्यवाड्गौर्वयोदधुः ॥ १३ ॥ इडाभिरग्निः॥
इडाभिरग्निरीड्यःसोमोदेवोऽअमर्त्यः ॥ अनुष्टुप्छन्दऽइन्द्रियम्प
ञ्चाविर्गौर्वयोदधुः ॥ १४ ॥ सुबर्हिरग्निः । पूषण्वान्त्स्तीर्णबर्हि
रमर्त्यः ॥ बृहतीच्छन्दऽइन्द्रियन्त्रिवत्सोगौर्वयोदधुः ॥ १५ ॥ दु
रोदेवीः ॥ दुरोदेवीर्दिशोमहीर्ब्रह्मादेवोबृहस्पतिः ॥ पङ्क्तिश्छ
न्दऽइहेन्द्रियन्तुर्यवाड्गौर्वयोदधुः ॥१६॥ उषेयह्वीसुपेशसाविश्वेदेवाऽ
अमर्त्याः ॥ त्रिष्टुप्छन्दऽइहेन्द्रियम्पष्ठवाड्गौर्वयोदधुः ॥१७॥ दैव्याहो
तारा । भिषजेन्द्रेणसयुजायुजा ॥ जगतीच्छन्दऽइन्द्रियमनड्वा

न्गौर्वयोदधुः ॥ १८ ॥ तिस्रऽइडा ॥ तिस्रऽइडासरस्वतीभारतीमरु
तोविशः ॥ विराट्छन्दऽइहेन्द्रियन्धेनुर्गौर्नवयोदधुः ॥ १९ ॥ त्वष्टा
तुरीपः ॥ त्वष्टातुरीपोऽअद्भुतऽइन्द्राग्नीपुष्टिवर्द्धना ॥ द्विपदाच्छन्द
ऽइन्द्रियमुक्षागौर्नवयोदधुः ॥२०॥ शमितानः ॥ शमितानोवनस्प
तिःसवितापस्रसुवन्भगम् ॥ ककुप्छन्दऽइहेन्द्रियंवशावेहद्वयोदधुः ॥
॥२१॥ स्वाहायज्ञम् ॥ स्वाहायज्ञंवरुणऽसुक्षत्रोभेषजङ्करत् ॥ अति
च्छन्दाऽइन्द्रियम्बृहदृषभोगौर्वयोदधुः ॥२२॥ [ २२ ] वसन्तेनऽऋ
तुना । देवावसवस्त्रिवृतास्तुताः ॥रथन्तरेणतेजसाहविरिन्द्रेवयोदधुः

॥ २३ ॥ ग्रीष्मेणऽऋतुनां । देवारुद्राःपंञ्चदशेस्तुताः ॥ बृहताय
शंसावलंऽहविरिन्द्रेवयोंदधुः ॥ २४ ॥ वर्षाभिर्ऋतुनांदित्यास्तोमे
सप्तदशेस्तुताः ॥ वैरूपेणांविशौजंसाहविरिन्द्रेवयोंदधुः ॥ २५ ॥ शा
रदेनंऽऋतुनां ॥ देवाऽएकविंशऽऋभवंस्तुताः ॥ वैराजेनांश्रिया
श्रियंऽहविरिन्द्रेवयोंदधुः ॥ २६ ॥ हेमन्तेनंऽऋतुंनां ॥ देवास्त्रिण
वेमरुतंस्तुताः ॥ बलेंनुशक्वरीऽसहोंहविरिन्द्रेवयोंदधुः ॥ २७ ॥ शै
शिरेणंऽऋतुनां । देवास्त्रयस्त्रिंऽशेमृतांस्तुताः ॥ सत्त्येनंरेवतींऽक्षत्रऽ
हविरिन्द्रेवयोंदधुः ॥ २८ ॥ [ ६ ] होतांयक्षत् ॥ होतांयक्षत्त्समिधा

ग्निमिडस्प्पुदेश्श्विनेन्द्रꣳसरस्वतीमुजोधूम्म्रोनगोधूमैꣳकुवलैर्भेषुज
म्मधुशष्प्पैर्न्नतेजꣳइन्द्रियम्पयुꣳसोमंꣲपरिस्त्रुताघृतम्मधुव्यन्त्वाज्ज्य
स्युस्यहोतुर्य्यंज ॥ २९ ॥ होतायक्षुत्तनूनपात्त्सरस्वतीम् ॥ होता
यक्षुत्तनूनपात्त्सरस्वतीमविम्मेषोनभेषुजम्पुथामधुमताभरन्नुश्श्विने
न्द्रायवीर्य्युम्म्बदरैरुपुवाकाभिर्भेषुजन्तोक्मभिꣳपयुꣳसोमंꣲपरिस्त्रुता
घृतम्मधुव्यन्त्वाज्ज्यस्युहोतुर्य्यंज ॥ ३० ॥ होतायक्षुन्नराश
सन्ननुग्नहुम्पतिꣳसुरयाभेषुजम्मेषꣳसरस्वतीभिषग्ग्रथोनचन्द्रच्च
श्श्विनोर्व्वुपाꣳइन्द्रस्यवीर्य्युम्म्बदरैरुपुवाकाभिर्भेषुजन्तोक्मभिꣳपयुꣳ

सोमं॑÷ परि॒स्रुता॑घृ॒तम्मधु॒व्यन्त्वाज्य॑स्य॒होत॒र्य्यज॑ ॥ २१ ॥ होता॑
यक्षदि॒डेडि॒त॑ऽ ॥ होता॑यक्षदि॒डेडि॒तऽआ॒जुह्वा॑नु॒ꣳसर॑स्वती॒मिन्द्र॒म्ब
लेन॑वर्द्ध॒यन्न्वृ॑ष॒भेण॒गवे॑न्द्रि॒यम॒श्विनेन्द्रा॑यभेष॒जंय्यवैः॑क॒र्क्कन्धु॑भि॒र्म्म
धु॑ल॒जैर्न्न॒मास॑र॒म्पय॒ꣳसोमं॑÷परि॒स्रुता॑घृ॒तम्मधु॒व्यन्त्वाज्य॑स्य॒होत॒र्य्य
ज॑ ॥ २२ ॥ होता॑यक्षद्ब॒र्हिरू॒र्ण्णम्म्र॑दाꣳ ॥ होता॑यक्षद्ब॒र्हिरू
र्ण्णम्म्र॑दाभि॒षङ्ना॒स॑त्त्या॒भि॒षजा॒श्विना॒श्वा॒शिशु॑मती॒भि॒षग्ग्धे॒नुꣳसर
स्वती॒भि॒षग्ग्दुह॒ऽइन्द्रा॑यभेष॒जम्पय॒ꣳसोमं॑÷परि॒स्रुता॑घृ॒तम्मधु॒व्यन्त्वा
ज्य॑स्य॒होत॒र्य्यज॑ ॥ २३ ॥ होता॑यक्ष॒द्दुरो॒दिशः॑ । कव॒ष्ष्यो॒

नव्यचंस्वतीरश्विभ्यान्नदुरोदिशऽइन्द्रोनरोदंसीदुघेदुहेधेनुःसरंस्व
त्त्यश्विनेन्द्रायभेषजꣳशुक्रन्नज्ज्योतिरिन्द्रियम्पयुःसोमःपरिस्रुतांघृ
तम्मधुव्यन्त्वाज्ज्यस्यहोतुर्य्यज ॥ ३४ ॥ होतायक्षत्सुपेशसोषे ।
नक्तन्दिवाश्विनासमञ्जातेसरस्वत्त्यात्त्विषिमिन्द्रेनभेषजꣳश्येनो
नरजंसाहृदाश्रियानुमासंरम्पयुःसोमःपरिस्रुतांघृतम्मधुव्यन्त्वा
ज्ज्यस्यहोतुर्य्यज ॥ ३५ ॥ होतायक्षद्दैव्याहोतारा । भिषजाश्वि
नेन्द्रन्नजागृविदिवानक्तन्नभेषजैःशूषꣳसरस्वतीभिषक्सीसेनदुहऽइ
न्द्रियम्पयुःसोमःपरिस्रुतांघृतम्मधुव्यन्त्वाज्ज्यस्यहोतुर्य्यज ॥३६॥

होतायक्षत्तिस्रोदेवीः ॥ होतायक्षत्तिस्रोदेवीर्न्नभेषजन्त्रयस्त्रिधात
वोपसोरूपमिन्द्रेहिरण्ययमश्विनेडानभारतीव्वाचासरस्वतीमहऽइ
न्द्रायदुहऽइन्द्रियम्पयुःसोमः ॥ परिस्रुताघृतम्मधुव्यन्त्वाज्ज्यस्य
होतुर्य्यज ॥ ३७ ॥ होतायक्षत्सुरेतसमृषभम् ॥ होतायक्षत्सुरे
तसमृषभन्नर्य्यापसन्त्वष्टारमिन्द्रमश्विनाभिषजन्नसरस्वतीमोजोन
जूतिरिन्द्रियंवृकोनरभसोभिषग्ग्यशःसुरयाभेषजꣳश्रियानमासर
म्पयुःसोमःपरिस्रुताघृतम्मधुव्यन्त्वाज्ज्यस्यहोतुर्य्यज ॥ ३८ ॥
होतायक्षद्वनस्पतिꣳशमितारम् ॥ होतायक्षद्वनस्पतिꣳशमिता

र्ꣳशतङ्क्रतुम्भीमन्नमन्युꣳराजानंव्याघ्रन्नमसाश्विनाभामꣳसरस्व
तीभिषगिन्द्रायदुहऽइन्द्रियम्पयꣳसोमः परिस्रुताघृतम्मधुव्यन्त्वा
ज्ज्यस्यहोतर्य्यज ॥ ३९ ॥ होतायक्षदग्निꣳस्वाहा ॥ होतायक्षद
ग्निꣳस्वाहाज्ज्यस्यस्तोकानाꣳस्वाहामेदसाम्पृथक्स्वाहागच्छाग
मश्विभ्याꣳस्वाहामेषꣳसरस्वत्त्यैस्वाहाऽऋषभमिन्द्रायसिꣳहाय
सहसऽइन्द्रियꣳस्वाहाग्निन्नभेषजꣳस्वाहासोममिन्द्रियꣳस्वाहेन्द्र
ꣳसुत्रामाणꣳसवितारंव्वरुणम्भिषजाम्पतिꣳस्वाहाव्वनस्प्पतिम्प्रिय
म्पाथोनभेषजꣳस्वाहादेवाऽआज्ज्यपाजुषाणोऽअग्निर्भेषजम्पयꣳसो

मं॑परिस्रुतांघृतम्मधुव्यन्त्वाज्यस्यहोतर्य्यज ॥ ४० ॥ [ १२ ] हो
तायक्षदश्विनौच्छागस्य । वपायामेदसोजुषेतांहविर्होतर्य्यज ॥
होतायक्षत्सरस्वतीम्मेषस्यवपाया मेदसोजुषतांहविर्होतर्य्यज ॥
होतायक्षदिन्द्रमृषभस्यवपायामेदसोजुषतांहविर्होतर्य्यज ॥४१॥
होतायक्षदश्विनौसरस्वतीम् ॥ होतायक्षदश्विनौसरस्वतीमिन्द्रँ
सुत्रामाणमिमेसोमाःसुरामाणश्छागैर्न्नमेषैर्ऋषभैःसुताःशष्पैर्न्नतो
क्मभिर्लाजैर्म्महस्वन्तोमदामासरेणपरिष्कृताःशुक्राःपयस्वन्तोमृ
ताःप्रस्थितावोमधुश्चुतस्तानश्विनासरस्वतीन्द्रःसुत्रामावृत्रहाजुष

न्ताꣳसोम्म्यम्मधुपिबन्तुमदन्तुव्व्यन्तुहोतुर्य्यज ॥४२॥ होतायक्षद्अश्विनौच्छागस्य । हविषऽआत्तामद्यमद्ध्यतोमेदऽउद्भृतम्पुराद्द्वेषोभ्भ्यः पुरापौरुषेय्यागृभोघस्तान्नूनङ्घासेऽअज्ज्राणांय्यवसप्प्रथमानाꣳसुमत्क्षराणाꣳशतरुद्रियाणामग्निष्वात्तानाम्पीवोपवसनानाम्पार्श्वतः श्रोणितः शितामुतऽउत्सादतोङ्गादङ्गादवत्तानाङ्करतऽएवाश्विनाजुषेताꣳहविर्होतुर्य्यज ॥ ४३ ॥ होतायक्षत्सरस्वतीम्मेषस्यहविषऽआवयदद्यमद्ध्यतोमेदऽउद्भृतम्पुराद्द्वेषोभ्भ्यः पुरापौरुषेय्यागृभोघसन्नूनङ्घासेऽअज्ज्राणांय्यवसप्प्रथमानाꣳसुमत्क्षराणाꣳशतरुद्रि

यांणामग्निष्ष्वात्तानाम्पीवोपवसनानाम्पार्श्वतःश्श्रोणितःशितामु

तऽउत्त्सादतोङ्गाङ्गादवत्तानाङ्करदेवꣳसरस्वतीजुषतांꣳहविर्होतर्य्य

ज ॥ ४४ ॥ होतायक्षदिन्द्रमृषभस्यहविषऽआवयदद्यमद्ध्यतोमेदऽ

उद्भृतम्पुराद्वेषोभ्यःपुरापौरुषेय्याग्गृभोघसन्नूनङ्घासेऽअज्ज्राणांय्यव

सप्प्रथमानाꣳसुमत्क्षराणाꣳशतरुद्रियाणामग्निष्ष्वात्तानाम्पीवोप

वसनानाम्पार्श्वतःश्श्रोणितःशितामुतउत्त्सादतोङ्गाङ्गादवत्ताना

ङ्करदेवमिन्द्रोजुषताꣳहविर्होतर्य्यज ॥ ४५ ॥ होतायक्षद्वनस्पतिम

भि । हिपिष्टतमयारभिष्ठयारशनयाधित ॥ यत्राश्विनोश्छागस्य

हुविषं÷प्प्रियाधामांनिुयत्रुसरंस्वत्त्यामेुषस्यंहुविषं÷प्प्रियाधामांनिुय
त्रेन्द्रंस्यऽऋुषुभस्यंहुविषं÷प्प्रियाधामांनिुयत्राुग्ग्नेः प्प्रियाधामांनिुयत्त्रु
सोमंस्यप्प्रियाधामांनिुयत्त्रेन्द्रंस्यसुत्राम्म्णं÷प्प्रियाधामांनिुयत्त्रंसवि
तुःप्प्रियाधांमानिुयत्त्रुव्वरुंणस्यप्प्रियाधामांनिुयत्त्रुव्वनुस्प्पतें÷प्प्रियापा
थांर्ठ्ठसिुयत्त्रंदेुवानांमाज्ज्युपानांप्प्रियाधामांनिुयत्त्राुग्ग्नेहोंतुं÷प्प्रिया
धामांनिुतत्त्रैताव्प्रुस्तुत्त्येवोपुस्तुत्त्येवोपावंस्त्रक्षद्दभीयसऽइवकत्त्वीकरं
देुवन्देुवोव्वनुस्प्पातिज्जुंषतार्ठ्ठहुविर्होतुर्य्यंज ॥४६॥ होतांयक्षदुग्ग्निर्ठ्ठ
स्विष्टुकृतम् ॥ होतांयक्षदुग्निर्ठ्ठस्विष्टुकृतमयांडुग्ग्निरुश्श्विनोुच्छागंस्य

हविषंः प्प्रियाधामान्न्ययाट्सरस्वत्यामेषस्यहविषंः प्प्रियाधामान्न्ययाडिन्द्रंस्यऽऋषभस्यंहविषंः प्प्रियाधामान्न्ययांडग्नेःप्प्रियाधामान्न्ययाट्सोमंस्यप्प्रियाधामान्न्ययाडिन्द्रंस्यसुत्राम्म्णंः प्प्रियाधामान्न्ययांट्सवितुःप्प्रियाधामान्न्ययाड्वरुंणस्यप्प्रियाधामान्न्ययाड्वनस्प्पतेंः प्प्रियापाथाꣳस्ययांड्देवानांमाज्ज्यपानांम्प्प्रियाधामांनियक्षंदग्ग्नेहोंतुंः प्प्रियाधामांनियक्षुत्त्स्वम्मंहिमानुमायंजतामेज्ज्याऽइषंः कृणोतुसोऽअंद्ध्वराजातवेंदाजुषताꣳहविहोंतुर्य्यंज ॥४७॥ [७] देवम्बुर्हिःसरंस्वतीसुदेवमिन्द्रेंऽअश्विनां ॥ तेजोनचक्षुरक्ष्योर्बुर्हिषादधुरिन्द्रियंवसुवनेंव

सुधेयंस्यव्यन्तुयज ॥ ४८ ॥ देवीर्द्वारः ॥ देवीर्द्वारोऽअश्विनाभिषजे
न्द्रंसरस्वती ॥ प्राणन्नवीर्य्यन्नसिद्वारोदधुरिन्द्रियंवसुवनेवसुधेयस्य
व्यन्तुयज ॥४९॥ देवीऽउषासौ ॥ देवीऽउषासावश्विनासुत्रामेन्द्रेसर
स्वती ॥ बलन्नवाचमास्यऽउषाभ्यान्दधुरिन्द्रियंवसुवनेवसुधेयस्य
व्यन्तुयज ॥ ५० ॥ देवीजोष्ट्री ॥ देवीजोष्ट्रीसरस्वत्यश्विनेन्द्रमवर्द्ध
यन् ॥ श्रोत्रन्नकर्णयोर्यशोजोष्ट्रीभ्यान्दधुरिन्द्रियंवसुवनेवसुधेय
स्यव्यन्तुयज ॥ ५१ ॥ देवीऽऊर्जाहुती ॥ देवीऽऊर्जाहुतीदुघेसुदुघेन्द्रे
सरस्वत्यश्विनाभिषजावतः ॥ शुक्रन्नज्योतिस्तनयोराहुतीधत्तऽ

इन्द्रियंव्वसुवनैव्वसुधेयंस्यव्यन्तुयजं ॥५२॥ देवादेवानाम् ॥ देवादेवा
नाम्भिषजाहोताराविन्द्रमश्विना । वषट्कारैःसरस्वतीत्त्विषिन्नहृदं
येमुतिꣳहोतृभ्यान्दधुरिन्द्रियंव्वसुवनैव्वसुधेयंस्यव्यन्तुयजं ॥ ५३ ॥
देवीस्तिस्रः॥देवीस्तिस्रस्तिस्रोदेवीरश्विनेडासरस्वती॥शूषन्नमध्ये
नाभ्यामिन्द्रायदधुरिन्द्रियंव्वसुवनैव्वसुधेयंस्यव्यन्तुयजं ॥ ५४ ॥
देवऽइन्द्रः ॥ देवऽइन्द्रोनराशꣳसस्त्रिवरूथःसरस्वत्याश्विभ्यामी
यतेरथः ॥ रेतोनरूपममृतञ्जनित्रमिन्द्रायत्त्वष्टादधदिन्द्रियाणिव
सुवनैव्वसुधेयंस्यव्यन्तुयजं ॥ ५५ ॥ देवोदेवैः ॥ देवोदेवैर्व्वनस्पति

हिरंण्ण्यपर्णाऽअश्विभ्यां्ठ्सरस्वत्त्यासुपिप्पुलऽइन्द्रांयपच्च्युतेम
धुं ॥ ओजोनजूतिॠषुभोनभामुंव्वनुस्प्पतिंन्नोदधादिन्द्रियाणिव्वसु
वनेंव्वसुधेयंस्यव्यन्तुयज ॥ ५६ ॥ देवम्बुर्हिः ॥ देवम्बुर्हिव्वारितीना
मद्धुरेस्त्तीर्ण्णमुश्विभ्यामूर्ण्णम्म्रदाःसरस्वत्त्यास्योनमिन्द्रतेसदंः
ईशायैमुन्न्युःराजानम्बुर्हिषादधुरिन्द्रियंव्वसुवनेव्वसुधेयंस्यव्यन्तुयज
॥ ५७ ॥ देवोऽअग्निः । स्विष्टकृद्देवान्यंक्षद्यथायुथःहोतारावुिन्द्रं
मुश्विनावाचावाचुःसरस्वतीमुग्निःसोमं्ठ्स्विष्टकृत्स्विष्टऽइन्द्रंः
सुत्रामासवितावरुणोभिषगिष्टोदेवोव्वनुस्प्पतिःस्विष्टादेवाऽआज्ज्यु

पार्थस्विष्टोऽअग्निरग्निनाहोताहोत्रेस्विष्टकृद्यशोनदधदिन्द्रियमूर्ज्ज
मपचितिथ्ठस्वधांव्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥ ५८ ॥ अग्निमद्य।
होतारमवृणीतायंय्यजमानःपचन्पक्तीःपचन्पुरोडाशान्बध्नन्नश्वि
भ्याञ्छागर्ठसरस्वत्यैमेषमिन्द्रायऽऋषभर्ठसुन्वन्नश्विभ्याथ्ठसर
स्वत्याऽइन्द्रायसुत्राम्णेसुरासोमान्त्सूपस्थाऽअद्य ॥५९॥ सूपस्थाऽ
अद्यदेवोव्वनस्पतिरभवदश्विभ्याञ्छागेनसरस्वत्यैमेषेणेन्द्रायऽ
ऋषभेणाक्षँस्तान्मेदस्तःप्रतिपचताग्गृभीषतावीवृधन्तपुरोडाशैरपुर
श्विनासरस्वतीन्द्रःसुत्रामासुरासोमाँस्त्वामद्य ॥ ६० ॥ त्वामु

द्यꣳऋषऽआर्षेयऽऋषीणान्नपादवृणीतायंयजमानोबहुभ्यऽआसङ्ग
तेभ्यऽएषमेदेवेषुवसुवार्य्यायक्ष्यतऽइतितायादेवादेवदानान्यद
स्तान्यस्म्माऽआचशास्वाचगुरस्वेषितश्चहोतरसिभद्रवाच्यायप्रेषि
तोमानुषꣳसूक्तवाकायसूक्ताब्रूहि ॥ ६१ ॥ इतिवाजसनेयशुक्लयजुःसं
हितायामेकविंशोऽध्यायः ॥ २१ ॥ तेजोसिपञ्चाग्नयएकाहिंकारायद्व
तत्सवितुर्द्दशविभूर्मात्रैकाकायद्व आब्रह्मंस्त्रयोदश शेषादेकैकोन्नवि
ꣳशतिरश्चतुस्त्रिꣳशत् ॥ ओम् तेजोसि॥तेजोसिशुक्रममृतमायुष्पा
ऽआयुर्म्मेपाहि ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोह

स्ताब्भ्यामाददे ॥१॥ इमामगृब्भ्णन् ॥ इमामगृब्भ्णन्रशनामृतस्य
पूर्व्वऽआयुषिविदथेषुकव्या ॥ सानोऽअस्मिन्त्सुतऽआबभूवऽऋतस्य
सामन्त्सरमारपन्ती ॥२॥ अभिधाऽअसि॥अभिधाऽअसिभुवनमसि
यन्तासिधर्ता॥सत्त्वमग्निंवैश्श्वानरꣳसप्प्रथसङ्गच्छस्वाहाकृतः॥३॥
स्वगात्त्वा ॥ देवेब्भ्यः प्प्रजापतयेब्ब्रह्मन्नश्श्वम्भन्त्स्यामिदेवेब्भ्यः
प्प्रजापतयेनराद्ध्यासम् । तम्बधानदेवेब्भ्यः प्प्रजापतयेतेनराद्ध्नुहि
॥४॥ प्रजापतयेत्त्वा ॥ प्रजापतयेत्त्वाजुष्टम्प्रोक्षामीन्द्राग्निब्भ्यान्त्वा
जुष्टम्प्रोक्षामिवायवेत्त्वाजुष्टम्प्रोक्षामिविश्श्वेब्भ्यस्त्वादेवेब्भ्योजुष्ट

म्प्रोक्षामिसर्व्वेभ्यस्त्वादेवेभ्योजुष्टम्प्रोक्षामि ॥ योऽअर्व्वन्तञ्जिघांᳫं
सतितमभ्यमीतिव्वरुणः। परोमर्त्तः परःश्वा ॥५॥[५] अग्नयेस्वाहा ॥
अग्नयेस्वाहासोमायस्वाहापाम्मोदायस्वाहासवित्रेस्वाहाव्वायवेस्वा
हाव्विष्ण्णवेस्वाहेन्द्रायस्वाहाबृहस्पतयेस्वाहामित्रायस्वाहाव्वरुणा
यस्वाहा॥६॥[१] हिङ्कारायस्वाहा ॥ हिङ्कारायस्वाहाहिङ्कृतायस्वाहा
क्क्रन्दतेस्वाहावक्क्रन्दायस्वाहाप्प्रोथतेस्वाहाप्प्रप्प्रोथायस्वाहागन्धा
यस्वाहाग्घ्रातायस्वाहानिविष्टायस्वाहोपविष्टाय स्वाहासन्दिताय
स्वाहाव्वल्गतस्वाहासीनायस्वाहाशयानायस्वाहास्वपतेस्वाहाजा

ग्यंतेस्वाहाकूजंतेस्वाहाप्रबुद्धायस्वाहाविजृम्भमाणायस्वाहाविचृ
त्तायस्वाहासꣳहानायस्वाहोपस्थितायस्वाहायनायस्वाहाप्रायणा
यस्वाहा ॥ ७ ॥ यतेस्वाहा ॥ यतेस्वाहाधावतेस्वाहोद्द्रावायस्वाहोद्
तायस्वाहाशूकारायस्वाहाशूकृतायस्वाहानिषण्णायस्वाहोत्थिताय
स्वाहाजवायस्वाहाबलायस्वाहाविवर्तमानायस्वाहाविवृत्तायस्वाहा
विधून्वानायस्वाहाविधूतायस्वाहाशुश्रूषमाणायस्वाहाशृण्वतेस्वा
हेक्षमाणायस्वाहेक्षितायस्वाहावीक्षितायस्वाहानिमेषायस्वाहायद
त्तितस्मैस्वाहायत्पिबतितस्मैस्वाहायन्मूत्रंकरोतितस्मैस्वाहा

कुर्वतेस्वाहांकृतायस्वाहा ॥ ८ ॥ [ २ ] तत्सवितुर्वरेण्यम्भर्गोदेव
स्यंधीमहि ॥ धियोयोनंःप्रचोदयात् ॥ ९ ॥ हिरण्यपाणिमूतये ।
सवितारमुपह्वये ॥ सचेत्तादेवतापदम् ॥ १०॥ देवस्यचेततंः ॥ देव
स्यचेततोमहीम्प्रसवितुर्हवामहे ॥ सुमतिंसत्यराधसम् ॥ ११ ॥
सुष्टुतिंसुमतीवृधः॥ सुष्टुतिंसुमतीवृधोरातिंसवितुरीमहे ॥ प्रदे
वायमतीविदे ॥ १२ ॥ रातिंसत्पतिम् ॥ रातिंसत्पतिम्महेसवि
तारमुपह्वये ॥ आसुवन्देववीतये ॥१३॥ देवस्यसवितुः ॥ देवस्यस
वितुर्म्मतिमासवंविश्वदेव्यम् ॥ धियाभगम्मनामहे ॥ १४ ॥

अग्निꣳस्तोमेन । बोधयसमिधानोऽअमर्त्त्यम् ॥ हव्यादेवेषुनोद
धत् ॥ १५ ॥ सहव्व्यवाट् ॥ सहव्व्यवाडमर्त्त्यऽउशिग्दूतश्चनोहितः॥
अग्निर्द्धियासमृण्वति ॥ १६ ॥ अग्निन्दूतम् ॥ अग्निन्दूतम्पुरोदधे
हव्व्यवाहमुपब्रुवे ॥ देवाँ ॥ ऽआसादयादिह ॥ १७ ॥ अजीजनो
हि । पवमानसूर्य्यंविधारेशक्मनापयः ॥ गोजीरयारꣳहमाणःपुर
न्ध्या ॥ १८ ॥ [ ९ ] विभूर्म्मात्रा । प्रभूःपित्राश्वोसिहयोस्यत्यो
सिमयोस्यर्वासिसप्तिरसिवाज्यसिवृषासिनृमणाऽअसिययुर्न्नामा
सिशिशुर्न्नामास्यादित्यानाम्पत्त्वान्विहिदेवाऽआशापालाऽएतन्देवे

ब्भ्यो॑ऽश्वु॒म्मेधा॑युप्प्रो॑क्षितꣳरक्षतेहर॒न्तिं॑ारि॒हर॑मता॒मि॒हधृ॒तिं॑रि॒हस्वधृ॑
ति॒ꣳस्वाहा॑ ॥१९॥ [२] काय॒स्वाहा॑ ॥ काय॒स्वाहा॒कस्म्मै॒स्वाहा॑कत॒
मस्म्मै॒स्वाहा॒स्वाहा॒धिमाधी॑ताय॒स्वाहा॒मनः॑प्प्र॒जाप॑तये॒स्वाहा॑चि॒त्तं
वि॒ज्ञा॑ताया॒दित्त्यै॒स्वाहा॒दित्त्यै॑म॒ह्यै॒स्वाहा॒दित्त्यै॑सुमृडी॒कायै॒स्वाहा॒स
र॑स्वत्त्यै॒स्वाहा॒सर॑स्वत्त्यैपाव॒कायै॒स्वाहा॒सर॑स्वत्त्यैबृह॒त्त्यै॒स्वाहा॑पू॒
ष्णे॒स्वाहा॑प॒ष्णेप्प्र॑पत्थ्या॒य॒स्वाहा॑पू॒ष्णेन॒रन्धि॑षाय॒स्वाहा॒त्त्वष्ट्रे॒स्वा
हा॒त्त्वष्ट्रे॑तु॒रीया॑य॒स्वाहा॒त्त्वष्ट्रे॑पु॒रु॒रूपा॑य॒स्वाहा॒विष्ण॑वे॒स्वाहा॒विष्ण॑वे
निभू॒य॒पाय॒स्वाहा॒विष्ण॑वेशिपिवि॒ष्टाय॒स्वाहा ॥ २० ॥ विश्वो॑देव

स्यं। नेतुम्मंत्तौंत्त्वुरीतसुकल्व्यम् ॥ व्विश्श्वौरायऽइंषुद्धयतिद्युम्न्नंवृंणी
तपुष्ष्यसेुस्वाहा॑२१[१]आब्रह्मंन् ॥ आब्रह्मंन्न्ब्राह्मणोब्रह्मवर्च्चसी
जांयतामाराष्ट्रेरांजुन्न्यंऽश्शूरंऽइषुव्व्योतिव्व्याधीमंहारथोजांयतान्दो
ग्ध्रींधेनुर्व्वौढानुड्वानाशुःसप्प्तिंपुरंन्धिर्य्योषांजिष्णूरंथेष्ठाःसुभेयोयु
वांस्ययजंमानस्यव्वीरोजांयतान्निकामेनिंकामेनःपुर्ज्जन्न्योव्वर्षतुफलव
त्त्योनुऽओऽषंधयःपच्च्यन्तांय्योगक्षेमोनःकल्प्पताम् ॥ २२ ॥
[ १ ] प्राणायुस्वाहा। पानायुस्वाहाव्व्यानायुस्वाहाचक्षुंषेस्वाहाश्श्रो
त्रांयुस्वाहांव्वाचेस्वाहामनंसेुस्वाहा ॥ २३ ॥ [ १ ] ॥ प्राच्च्यैदिशे।

स्वाहार्वाच्च्यैदिशेस्वाहादक्षिणायैदिशेस्वाहार्वाच्च्यैदिशेस्वाहाप्प्रती
च्च्यैदिशेस्वाहार्वाच्च्यैदिशेस्वाहोदीच्च्यैदिशेस्वाहार्वाच्च्यैदिशेस्वाहो
र्ध्वायैदिशेस्वाहार्वाच्च्यैदिशेस्वाहावाच्च्यैदिशेस्वाहार्वाच्च्यैदिशेस्वा
हा ॥ २४ ॥ [ १ ] अद्भ्यःस्वाहा ॥ वार्भ्यःस्वाहोदकायस्वाहातिष्ठ
न्तीब्भ्यःस्वाहास्रवन्तीब्भ्यःस्वाहास्यन्दमानाब्भ्यःस्वाहाकूप्प्या
ब्भ्यःस्वाहासूद्याब्भ्यःस्वाहाधार्य्याब्भ्यःस्वाहार्णवायस्वाहासमुद्रा
यस्वाहासरिरायस्वाहा ॥ २५ ॥ [१] वातायस्वाहा ॥ धूमायस्वाहा
ब्भ्रायस्वाहामेघायस्वाहाविद्योतमानायस्वाहास्तनयतेस्वाहावस्फू

ज्जंतुस्वाहावर्षतुस्वाहाववर्षतुस्वाहोग्रंवर्षतुस्वाहाशीघ्रंवर्षतुस्वाहो
द्गृह्णतेस्वाहोद्गृहीतायुस्वाहाप्रुष्णतेस्वाहाशीकायुतेस्वाहाप्रुष्वा
भ्युःस्वाहाह्रादुनीभ्युःस्वाहानीहारायुस्वाहा ॥ २६ ॥ [ १ ] अग्न
येस्वाहा ॥ अग्नयेस्वाहासोमायुस्वाहेन्द्रायुस्वाहापृथिव्यैस्वाहान्त
रिक्षायुस्वाहादिवेस्वाहादिग्भ्यःस्वाहाशाभ्युःस्वाहोर्व्यैदिशेस्वा
हार्वाच्यैदिशेस्वाहा ॥ २७ ॥ [ १ ] नक्षत्रेभ्युःस्वाहा । नक्षत्रि
येभ्युःस्वाहाहोरात्रेभ्युःस्वाहार्द्धमासेभ्युःस्वाहामासेभ्युःस्वाहऽ
ऋतुभ्युःस्वाहार्त्तवेभ्युःस्वाहासंवत्सुरायुस्वाहाद्यावापृथिवीभ्या

ॐस्वाहाचन्द्रायस्वाहासूर्य्यायस्वाहारश्मिभ्यःस्वाहावसुभ्यः
स्वाहारुद्रेभ्यःस्वाहादित्येभ्यःस्वाहामरुद्भ्यःस्वाहाविश्वेभ्योदे
वेभ्यःस्वाहामूलेभ्यःस्वाहाशाखाभ्यःस्वाहावनस्पतिभ्यःस्वा
हापुष्पेभ्यःस्वाहाफलेभ्यःस्वाहौषधीभ्यःस्वाहा ॥ २८ ॥ [ १ ]
शतम् ॥१३००॥ पृथिव्यैस्वाहा ॥ पृथिव्यैस्वाहान्तरिक्षायस्वाहादिवे
स्वाहासूर्य्यायस्वाहाचन्द्रायस्वाहानक्षत्रेभ्यःस्वाहाद्भ्यःस्वाहौषधी
भ्यःस्वाहावनस्पतिभ्यःस्वाहापरिप्लवेभ्यःस्वाहाचराचरेभ्यः
स्वाहासरीसृपेभ्यःस्वाहा ॥ २९ ॥ [ १ ] असवेस्वाहा ॥ असं

वेस्वाहावसवेस्वाहाविभुवेस्वाहाविवस्वतेस्वाहागणश्रियेस्वाहागण
पतयेस्वाहाभिभुवेस्वाहाधिपतयेस्वाहाशूषायस्वाहासꣳसर्प्पायस्वा
हाचन्द्रायस्वाहाज्ज्योतिषेस्वाहामलिम्लुचायस्वाहादिवापतयते
स्वाहा ॥ ३० ॥ [ १ ] मधवेस्वाहा ॥ मधवेस्वाहामाधवायस्वाहा
शुक्रायस्वाहाशुचयेस्वाहानभसेस्वाहानभस्यायस्वाहेषायस्वाहो
र्ज्जायस्वाहासहसेस्वाहासहस्यायस्वाहातपसेस्वाहातपस्यायस्वा
हाꣳहसस्पतयेस्वाहा ॥ ३१ ॥ [ १ ] वाजायस्वाहा । प्प्रसवाय
स्वाहापिजायस्वाहाक्रतवेस्वाहास्वःस्वाहामूर्द्ध्नेस्वाहाव्यश्नुविनेस्वा

हान्त्यायुस्वाहान्त्यायभौवुनायुस्वाहाभुवनस्युपतयेस्वाहाधिपत
येस्वाहाप्रुजापतयेस्वाहा ॥ ३२ ॥ [ १ ] आयुर्य्युज्ञेन । कल्पता
ॐस्वाहाप्प्राणोयुज्ञेनकल्पताॐस्वाहापानोयुज्ञेनकल्पताॐस्वाहा
व्व्यानोयुज्ञेनकल्पताॐस्वाहोदानोयुज्ञेनकल्पताॐस्वाहासमानो
युज्ञेनकल्पताॐस्वाहाचक्षुर्य्युज्ञेनकल्पताॐस्वाहाश्श्रोत्रंय्युज्ञेन
कल्पताॐस्वाहाव्वाग्युज्ञेनकल्पताॐस्वाहामनोयुज्ञेनकल्पताॐ
स्वाहात्त्वमायुज्ञेनकल्पताॐस्वाहाब्ब्रह्मायुज्ञेनकल्पताॐस्वाहा
ज्ज्योतिर्य्युज्ञेनकल्पताॐस्वाहास्स्वर्य्युज्ञेनकल्पताॐस्वाहापृष्ठंय्यु

ज्ञेनंकल्पताᳪंस्वाहांयज्ञोयज्ञेनंकल्पताᳪंस्वाहां ॥ ३३॥ एकंस्मै
स्वाहाद्वाभ्याᳪंस्वाहांशतायस्वाहैकंशतायस्वाहाव्युष्ट्यैस्वाहांस्व
र्गायस्वाहां ॥ ३४ ॥ [ १ ] इति श्रीवाजसनेयशुक्लयजुःसंहितायांदी
र्घपाठेद्वाविंशोऽध्यायः ॥ २२ ॥ हिरण्यगर्भोयःप्राणतोद्विकौमुअन्त्य
ष्टौवायव्यापश्वप्राणायतिस्रउत्तसक्थ्याद्वादशगायत्रीकस्त्वाषट्कौकः
स्विदष्टौकास्विदशसुभुःस्वयंभूस्तिस्रएकादशपंचषष्टिः॥ ॐहिरण्य
गर्भःसम्॥ हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यंजातःपतिरेकऽआसी
त्॥सदांधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम॥१॥ उपया

मगृंहीतोसि॥प्रजापंतयेत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिऽसूर्य्यंस्तेमहिमा॥
यस्तेहंन्त्संवत्त्सुरेमंहिमासंम्बभूवयस्तेंव्वायावुन्तरिंक्षेमाहिमासंम्ब
भूवयस्तेंदिविसूर्य्यंमहिमासंम्बभूवतस्म्मैतेमहिम्म्नेप्प्रजापंतयेस्वा
हांदेवेब्भ्यं: ॥२॥ [ २ ] यःप्प्राणतोनिमिषतोमंहित्वैकऽइद्राजाजग
तोवभूव ॥ यऽईशेंऽअस्यद्विपदश्च्चतुंष्प्पदःकस्म्मैंदेवायंहविषांविधे
म ॥ ३ ॥ उपयामगृंहीतोसि । प्प्रजापंतयेत्त्वाजुष्टङ्गृह्णाम्म्येषतेयो
निश्च्चन्द्रमास्तेमहिमा ॥ यस्तेरात्रौसंवत्त्सरेमंहिमासम्म्बभूवयस्ते
पृथिव्यामग्ग्नौमंहिमासम्म्बभूवयस्तेनक्षत्रेषुचन्द्रमंसिमहिमासम्म्ब

भूवुतस्म्मैतेमहिम्न्नेप्प्रुजापतयेदेवेब्भ्युःस्वाहा ॥ ४ ॥ [ २ ] युञ्ज
न्तिब्ब्रध्नमंरुषञ्चरंन्तुम्परितस्त्थुषः ॥ रोचन्तेरोचुनादिवि ॥ ५ ॥
युअन्त्यंस्य ॥ युजन्त्यंस्युकाम्म्याहरीविपक्षसुरथे ॥ शोणाधृष्ण्णू
नृवाहंसा ॥ ६ ॥ यद्वातः ॥ यद्वातोऽअुपोऽअगंनीगन्प्रियामिन्द्रंस्य
तुन्न्वम् ॥ एतङ्स्तोतरुनेनंपुथापुनुरश्श्वमावर्तयासिनः ॥ ७ ॥ व्व
संवस्त्वा । अन्तुगायुत्रेणुच्छन्दंसारुद्रास्त्वांअन्तुत्रैष्टुभेनुच्छन्दं
सादित्त्यास्त्वांअन्तुजागंतेनुच्छन्दंसा ॥ भूब्भुंवुःस्स्वुर्लाजी३ञ्छाची३
न्यद्युगव्यंऽएतदन्नंमत्तदेवाऽएवदन्नंमद्धिप्प्रजापते ॥८॥ कःस्वित् ॥

कऽस्विदेकाकीचरतिकऽउस्विज्जायतेपुनः ॥ किंᳩस्विद्धिमस्यंभेषुज
ङ्किम्म्वावपनम्मुहत् ॥ ९ ॥ सूर्य्यऽएकाकी । चरतिचुन्द्रमाजायते
पुनः॥अग्निर्हिमस्यंभेषुजम्भूमिरावपनम्मुहत् ॥ १०॥ कास्वित् ॥
कास्विदासीत्पूर्वचित्तिःकिंᳩस्विदासीद्बृहद्वयः ॥ कास्विदासीत्पि
लिप्पिलाकास्विदासीत्पिशाङ्गिला ॥ ११ ॥ द्यौरासीत् ॥ द्यौरासी
त्पूर्वचित्तिरश्वऽआसीद्बृहद्वयः ॥ अविरासीत्पिलिप्पिलारात्रिरासी
त्पिशाङ्गिला ॥ १२ ॥ [ ८ ] वायुष्ट्वा । पचुतैरवत्त्वसितग्रीवश्छा
गैर्न्यग्रोधश्चमुसैःशल्मुलिर्वृद्ध्या ॥ एषस्यराथ्योवृषापड्भिश्च

तुभिर्देवगणैर्ब्रह्माकृण्वन्नो वतु नमो ग्नये ॥ १३ ॥ संशितोर
श्मिनारथःसंशितोरश्मिनाहयः ॥ संशितोऽअप्स्वप्सुजाब्र
ह्मासोमपुरोगवः ॥ १४ ॥ स्वयंवाजिन् ॥ स्वयंवाजिँस्तन्वङ्कल्प
यस्वस्वयंयजस्वस्वयञ्जुषस्व ॥ महिमातेन्येननसन्नशे ॥ १५ ॥
नवै ॥ नवाऽउऽएतन्म्रियसेनरिष्यसिदेवाँ ऽइदेषिपथिभिःसुगे
भिः ॥ यत्रासतेसुकृतोयत्रतेययुस्तत्रत्वादेवःसवितादधातु ॥ १६ ॥
अग्निःपशुः ॥ अग्निःपशुरासीत्तेनायजन्तसऽएतँल्लोकमजयद्यस्मि
न्नग्निःसतेलोकोभविष्यतितञ्जेष्यसिपिबैताऽअपः ॥ वायुःपशुरा

सीत्तेनायजन्तुसऽएतँल्लोकमंजयद्यस्म्मिन्वायुः सतैंलोकोभंविष्यति
तञ्जेष्ष्यसिपिबैताऽअपः ॥ सूर्यः पुशुरासीत्तेनायजन्तुसऽएतँल्लोक
मंजयुद्यस्म्मिन्त्सूर्य्युः सतैंलोकोभंविष्ष्यतितञ्जेष्ष्यसिपिबैताऽअपः
॥ १७ ॥ प्राणायस्वाहां । पानायस्वाहांव्यानायस्वाहां ॥ अम्बेऽअ
म्बिकेम्बालिकेनमानयतिकश्चुन ॥ ससंस्त्यश्वकः सुभंद्रिकाङ्का
म्पीलवासिनीम् ॥ १८॥ गुणानान्त्वा । गुणपतिंᳪहवामहेप्प्रियाणा
न्त्वाप्प्रियपतिंᳪहवामहेनिधीनान्त्वानिधिपतिंᳪहवामहेव्वसोमम ॥
आहमंजानिगर्भधमात्त्वमंजासिगर्भधम् ॥ १९ ॥ ताऽउभौ । चुतु

रं॑ऽपुदः सुम्प्रसा॑रयावस्वुर्गेलोके प्रोर्णुवाथां॒ वृषा॑ वाजी रे॑तो॒धा रेतो॑ द
धातु ॥ २० ॥ [ ३ ] उत्स॑क्थ्या॒ऽअव॑ । गुदन्धे॑हि॒ समु॒ञ्जिञ्चा॑रया॒ वृ
षन् । य स्त्री॒णां जी॑व॒भोज॑नः ॥ २१ ॥ युका॑सुकौ । शं॑कुन्ति॒काह
लुगिति॒ वञ्च॑ति । आह॑न्ति॒ गुभे॒ पसो॒ निग॑ल्गली॒ति धार॑का ॥ २२ ॥ यु
को॑ऽसुकौ । शं॑कुन्तुकऽआह॒लगिति॒ वञ्च॑ति ॥ विव॑क्षतऽइव ते॒ मुखु॒मध्व
र्य्यो॒ मानु॒स्त्वम॒भिभा॑षथाः ॥ २३ ॥ मा॒ता च॑ । ते॒ पि॒ता च॒ तेऽग्रं॒ वृक्ष
स्य॑ रोहतः ॥ प्रति॒लामीति॒ ते पि॒ता गु॒भे मु॒ष्टिमं॑तꣳसयत् ॥ २४ ॥ मा
ता च॑ । ते॒ पि॒ता च॒ तेऽग्रे॒ वृक्ष॑स्य क्रीडतः ॥ विव॑क्षतऽइव ते॒ मुखु॒म्ब्रह्म

लोमुविचिन्त्वन्तुमनीषया ॥ देवानाम्पत्न्योदिशः सूचीभिः शम्म्य
न्तुत्वा ॥ ३६ ॥ रजताहरिणीः सीसायुजोयुज्यन्तेकर्मभिः ॥ अ
श्वस्यवाजिनस्त्वचिसिमाः शम्म्यन्तुशम्यन्तीः ॥ ३७ ॥ कुविदु
ङ्ग ॥ यवमन्तोयवश्चिद्यथादान्त्यनुपूर्वंवियूय ॥ इहेहैषाङ्कृणुहिभोज
नानियेबर्हिषोनमऽउक्तिंयजन्ति ॥ ३८ ॥ [८] कस्त्वा ॥ कस्त्वा
च्छ्यतिकस्त्वाविशास्तिकस्तेगात्राणिशम्म्यति ॥ कऽउतेशमिता
कविः ॥३९॥ ऋतवस्ते ॥ ऋतवस्तऋतुथापर्वशमितारोविशासतु॥
सम्वत्सरस्यतेजसाशमीभिः शम्म्यन्तुत्वा ॥ ४० ॥ अर्द्धमासाःप

रूꣳषितेमासाऽआच्छ्यन्तुशम्म्यन्तः ॥ अहोरात्राणिमरुतोवि
लिष्टꣳसूदयन्तुते ॥ ४१ ॥ दैव्याऽअद्ध्वर्य्यवस्त्वाच्छ्यन्तुविचशा
सतु॥गात्राणिपर्व्वशस्तेसिमाꣳकृण्वन्तुशम्म्यन्तीः ॥ ४२ ॥ द्यौस्ते ।
पृथिव्यन्तरिक्षंव्वायुश्छिद्रम्पृणातुते ॥ सूर्य्यस्तेनक्षत्रैꣳसहलोकङ्कृणो
तुसाधुया ॥ ४३ ॥ शन्ते ॥ शन्तेपरेभ्योगात्रेभ्यꣳशमस्त्ववरे
भ्यः ॥ शमस्थभ्योमज्जभ्यꣳशम्म्वस्तुतन्वैतव ॥४४॥ [ ६ ] कः
स्विद् ॥ कःस्विदेकाकीचरतिकऽउस्विज्जायतेपुनः ॥ किꣳस्विद्धिम
स्यभेषजङ्किम्म्वावपनम्महत् ॥ ४५ ॥ सूर्य्यऽएकाकी । चरतिचन्द्र

मांजायतुपुनः ॥ अग्निर्हिमस्यंभेषजम्भूमिरावपंनम्महत् ॥ ४६ ॥
किꣳस्वित् ॥ किꣳस्वित्सूर्य्यसमञ्ज्योतिःकिꣳसंमुद्रसंमंसरंः ॥
किꣳस्वित्पृथिव्यैवर्षीयुःकस्यमात्रानविद्यते ॥ ४७ ॥ ब्रह्मसूर्य्यंस
मम् ॥ ब्रह्मसूर्य्यसमञ्ज्योतिर्द्यौःसंमुद्रसंमंसरंः ॥ इन्द्रःपृथिव्यैव
र्षीयान्गोस्तुमात्रानविद्यते ॥ ४८ ॥ पृच्छामित्वा । चितयेदेवसख
यदित्त्वमत्रमनंसाजुगन्थं ॥ येषुविष्णुस्त्रिषुपदेष्वेष्टस्तेषुविश्वं
म्भुवनमाविवेश ॥ ४९ ॥ अपितेषु । त्रिषुपदेष्वस्मियेषुविश्वं
म्भुवनमाविवेशं ॥ सद्यःपर्य्यैमिपृथिवीमुतद्यामेकेनाङ्गेनदिवोऽअस्य

पृष्ठम् ॥ ५० ॥ केष्वन्तः । पुरुषऽआविवेशकान्यन्तः पुरुषेऽअर्प्पितानि ॥ एतद्ब्रह्मन्नुपवल्हामसित्त्वाकिᳬस्विन्नःप्प्रातिवोचास्यत्र ॥

॥ ५१ ॥ पञ्चस्वन्तः । पुरुषऽआविवेशतान्यन्तः पुरुषेऽअर्प्पितानि ॥ एतत्त्वात्रप्प्रतिमन्वानोऽअस्मिन्नमाययाभवस्युत्तरोमत् ॥ ५२ ॥

[ ८ ] कास्वित् ॥ कास्विदासीत्पूर्व्वचित्तिःकिᳬस्विदासीद्बृहद्वयः ॥ कास्विदासीत्पिलिप्पिलाकास्विदासीत्पिशङ्गिला ॥ ५३ ॥ द्यौरासीत् ॥ द्यौरासीत्पूर्व्वचित्तिरश्वऽआसीद्बृहद्वयः ॥ अविरासीत्पिलिप्पिलारात्रिरासीत्पिशङ्गिला ॥ ५४ ॥ काऽईम् ॥ काऽईमरेपिशङ्गिला

काऽईङ्करूपिशाङ्गिला ॥ कऽईमास्कन्दंमर्षतिकऽईम्पन्थांविसर्प्पति ॥
॥ ५५ ॥ अजारे । पिशाङ्गिलाश्वावित्कुरूपिशाङ्गिला ॥ शशऽआस्क
न्दंमर्षत्त्यहिःपन्थांविसर्प्पति ॥ ५६ ॥ कत्यस्य । विष्ठाःकत्यक्षरा
णिकतिहोमासःकतिधासमिद्धः ॥ यज्ञस्यत्वाविदथापृच्छमत्रकति
होतारऽऋतुशोयजन्ति ॥ ५७ ॥ षडस्य । विष्ठाःशतमक्षराण्यशी
तिर्होमाःसमिधोहतिस्रः ॥ यज्ञस्यतेविदथाप्रब्रवीमिसप्तहोतारऽ
ऋतुशोयजन्ति ॥ ५८ ॥ कोऽअस्य । वेदभुवनस्यनाभिङ्कोद्यावापृ
थिवीऽअन्तरिक्षम् ॥ कःसूर्य्यस्यवेदबृहतोजनित्रङ्कोवेदचन्द्रमसंय

तोजाः ॥ ५९ ॥ वेदाहम् ॥ वेदाहमस्यभुवनस्यनाभिंवेदद्यावापृथि
वीऽअन्तरिक्षम् ॥ वेदसूर्य्यस्यबृहतोजनित्रमथोवेदचन्द्रमसंय्यतो
जाः ॥ ६० ॥ पृच्छामित्वा ॥ पृच्छामित्वापरमन्तम्पृथिव्याःपृ
च्छामियत्रभुवनस्यनाभिः ॥ पृच्छामित्वावृष्णोऽअश्वस्यरेतःपृ
च्छामिवाचःपरमंव्योम ॥ ६१ ॥ इयंवेदिः ॥ इयंवेदिःपरोऽअन्तः
पृथिव्याऽअयंय्यज्ञोभुवनस्यनाभिः॥ अयꣳसोमोवृष्णोऽअश्वस्यरे
तोब्रह्मायंवाचःपरमंव्योम ॥ ६२ ॥ [१०] सुभूःस्वयम्भूः । प्रथ
मोन्तर्म्महत्यर्ण्णवे ॥ दधेहगर्भमृत्वियंय्यतोजातःप्रजापतिः ॥
३४

॥ ६३ ॥ होतांयक्षत् ॥ होतांयक्षत्प्रजापंतिुꣳसोमंस्यमहिम्नः ॥
जुषतााम्पिबंतुसोमुꣳहोतुर्य्यजं ॥ ६४ ॥ प्रजांपतेुनं । त्त्वदेताान्यु
न्योविश्वांरूपाणिपरिताबंभूव ॥ यत्कांमास्तेजुहुमस्तन्नोंऽअस्तुवु
यꣳस्यांमुपतंयोरयीणाम् ॥ ६५ ॥ [ ३ ] इति श्रीवाजसनेयशुक्लय
जुस्संहितायांदीर्ग्घपाठेत्रयोविंशोऽध्यायः ॥ ॥ २३ ॥ अश्वस्तूपरो
धूम्रान्वसंतायसमुद्रायशिशुमारान्मयुःप्राजापत्त्योदशकाश्चत्त्वारश्च
त्त्वारिꣳशत् ॥ ॐ अश्वंस्तूपुरः ॥ अश्वंस्तूपरोगोमृगस्तेप्प्राजा
पुत्त्याःकृष्णग्रींवऽआग्नेयोरराटेपुरस्त्तात्त्सारस्वतीमेष्यधस्ताद्ध

न्वोराश्विनावधोरामौ बाह्वोः सौमापौष्णः श्यामो नाभ्याᳬ सौर्ययामौ श्वेतश्च कृष्णश्च पार्श्वयोस्त्वाष्ट्रौ लोमशसक्थौ सक्थ्योर्वायव्यः श्वेतः पुच्छऽइन्द्राय स्वपस्याय वेहद्वैष्णवो वामनः ॥ १ ॥ रोहितो धूम्ररोहितः । कर्कन्धुरोहितस्ते सौम्या बभ्रुररुणबभ्रुः शुकबभ्रुस्ते वारुणाः शितिरन्ध्रोऽन्यतः शितिरन्ध्रः समन्तशितिरन्ध्रस्ते सावित्राः शितिबाहुरन्यतः शितिबाहुः समन्तशितिबाहुस्ते बार्हस्पत्याः पृषती क्षुद्रपृषती स्थूलपृषती ता मैत्रावरुण्यः ॥ २ ॥ शुद्धवालः सर्वशुद्धवालो मणिवालस्तऽआश्विनाः श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपत

येकुण्णांग्यामाऽअंवलिप्पारौद्रानभौरूपाःपाज्जन्न्याः ॥ ३ ॥ पृ
श्निस्तिरश्चीनंपृश्निः ॥ पृश्निस्तिरश्चीनंपृश्निरूर्द्धपृश्निस्तेमारु
ताःफुल्गूर्लौहितोर्णीपलक्षीताःसारस्वत्त्यःप्लीहाकण्णःशुण्ठाकण्णों
द्ध्यालोहकण्णस्तेत्वाष्ट्राःकृष्णग्रीवःशितिकक्षोञ्जिसक्थस्तऽऐन्द्रा
ग्न्नाःकृष्णाञ्जिरल्पाञ्जिर्म्महाञ्जिस्तऽउषस्याः ॥ ४ ॥ शिल्पावै
श्वदेव्यः ॥ शिल्पावैश्वदेव्योरोहिण्यस्त्र्यवयोवाचेविज्ञाताऽअदि
त्यैसरूपाधात्रेवत्सतर्य्यौदेवानाम्पत्नीभ्यः ॥ ५ ॥ कृष्णग्रीवा
आग्नेयाः । शितिभ्रवोवसूनाᳪंरोहितारुद्राणाᳪंश्वेताऽअवरोकि

णंऽआदित्यानान्नभोरूपाःपार्ज्जन्याः ॥ ६ ॥ उन्नतऽऋषभः ॥ उन्न
तऽऋषभोवामनस्तऽऐन्द्रावैष्णवाऽउन्नतःशितिबाहुःशितिपृष्ठस्तऽ
ऐन्द्राबार्हस्पत्याःशुकरूपावाजिनाःकल्माषाऽआग्निमारुताःश्या
माःपौष्णाः ॥ ७ ॥ एताऽऐन्द्राग्नाः ॥ एताऽऐन्द्राग्नाद्विरूपाऽअ
ग्नीषोमीयावामनाऽअनड्वाहऽआग्नावैष्णवावशामैत्रावरुण्यन्यतः
ऽएन्योमैत्र्यः ॥ ८ ॥ कृष्णग्रीवाऽआग्नेयाः ॥ कृष्णग्रीवाऽ
आग्नेयाबभ्रवःसौम्याःश्वितावायव्याऽअविज्ञाताऽअदित्यैसरूपा
धात्रेवत्सतर्योदेवानाम्पत्नीभ्यः ॥ ९ ॥ कृष्णाभौमाः ॥ कृष्णा

भौमाधूम्म्राऽआन्तरिक्षाबृहन्तौदिव्याःशबलावैद्युताःसिध्मास्तारकाः ॥ १० ॥ [ १० ] धूम्म्रान्वसन्ताय ॥ धूम्म्रान्वसन्तायालभते श्वेतान्ग्रीष्म्मायकृष्ण्णान्वर्षाब्भ्योरुणाञ्छरदेपृषतोहेमन्तायपिशङ्गाञ्छिशिराय ॥११॥ त्र्यवयोगायत्र्यै । पञ्चावयस्त्रिष्टुभेदित्यवाहोजगत्यैत्रिवत्साऽअनुष्टुभेतुर्य्यवाहऽउष्ण्णिहे॥ १२ ॥ पृष्ठवाहोविराजे॥ पृष्ठवाहोविराजेऽउक्षाणोबृहत्याऽऋषभाःककुभेनड्वाहःपङ्क्त्यैधेनवोतिच्छन्दसे॥१३॥कृष्ण्णग्ग्रीवाऽआग्नेयाः ॥कृष्ण्णग्ग्रीवाऽआग्नेयाबभ्रवःसौम्याऽउपध्वस्ताःसावित्रावत्सतर्य्यःसारस्वत्त्यःश्यामाःपौ

ष्णाः पृश्नयो मारुता बहुरूपा वैश्वदेवा ब्रुशा द्यावापृथिवीयाः ॥ १४ ॥
उक्ताः संचराः ॥ उक्ताः संचरा एता ऐन्द्राग्नाः कृष्णा वारुणाः पृश्नि
यो मारुताः कायास्तूपराः ॥ १५ ॥ अग्नयेऽनीकवते । प्रथमजानालं
भते मरुद्भ्यः सान्तपनेभ्यः सवात्या मरुद्भ्यो गृहमेधिभ्यो बष्किहा
न्मरुद्भ्यः क्रीडिभ्यः संसृष्टा मरुद्भ्यः स्वतवद्भ्योऽनुसृष्टान् ॥ १६॥
उक्ताः संचराः ॥ उक्ताः संचरा एता ऐन्द्राग्नाः प्राशृङ्गा माहेन्द्रा बहु
रूपा वैश्वकर्मणाः॥१७॥धूम्रा बभ्रुनीकाशाः । पितॄणां सोमवता
म्बभ्रवो धूम्रनीकाशाः ॥ पितॄणां बर्हिषदां कृष्णा बभ्रुनीकाशाः पितॄ

णामंग्निष्ष्वात्तानांकृष्णाःपृषंन्तस्त्रैयम्बुकाः ॥१८॥ उक्काःसंञ्चुरा ॥
उक्काःसंञ्चुराऽएतांःशुनासुीरीयाःश्वेताव्वांयुव्व्याःश्वेताःसौर्य्याः॥१९॥
वुसुन्तायंकुपिञ्जंलान्॥वुसुन्तायंकुपिञ्जंलानालंभतेग्ग्रीष्म्मायंकलुवि
ङ्कांन्वुर्षाभ्यंस्त्तित्तिरींन्छुरदेव्वर्त्तिकाहेमुन्तायुकक्करान्छिशिरायुव्विकं
करान् ॥२०॥ [ १० ] सुमुद्रायंशिशुमारांन् ॥ सुमुद्रायंशिशुमाराना
लंभतेपुर्ज्जन्न्यांयमुण्डूकांनुद्भ्योमत्स्यांन्मित्रायंकुलीपयान्वरुणाय
नाक्रान् ॥ २१ ॥ सोमांयहंसान् ॥ सोमांयहंसानालंभतेव्वायवे
वुलाकाऽइन्द्राग्निभ्याङ्क्रुञ्चांन्मित्रायंमुद्गून्वरुणायचक्रवाकान्॥

॥ २२ ॥ अग्नयेकुटरूँन् ॥ अग्नयेकुटरूनालभतेवनस्पतिभ्यऽ
उलूकानग्नीषोमाभ्याञ्चाषानश्विभ्याम्मयूरान्मित्रावरुणाभ्या
ङ्कपोतान् ॥ २३ ॥ सोमायलबानालभतेत्त्वष्ट्रेकौलीकाङ्गोषादीर्देवा
नाम्पत्नीभ्यङ्कुलीकादेवजामिभ्योग्नयेगृहपतयेपारुष्णान् २४॥
अह्नेपारावतान् ॥ अह्नेपारावतानालभतेरात्र्यैसीचापूरहोरात्रयोः
सन्धिभ्योजतूम्मासेभ्योदात्त्यौहान्त्संवत्सरायमहतःसुपर्णान् ॥
॥ २५ ॥ भूम्म्याऽआखून् ॥ भूम्म्याऽआखूनालभतेन्तरिक्षायपाङ्क्
न्दिवेकशान्दिग्भ्योनकुलाम्बभ्रुकानवान्तरदिशाभ्यः ॥ २६ ॥

वस॑भ्य॒ऽऋश्या॑न् ॥ वसु॑भ्य॒ऽऋश्या॒नाल॑भते रु॒द्रेभ्यो॒ रुरू॑नादि॒त्ये
भ्यो॒ न्यङ्कू॒न्विश्वे॑भ्यो दे॒वेभ्यः॑ पृष॒तान्त्सा॒ध्येभ्यः॑ कु॒लुङ्गा॑न् ॥२७॥
ईशा॑नाय॒ पर॑स्वतः ॥ ईशा॑नाय॒ पर॑स्वत॒ऽआल॑भते मि॒त्राय॑ गौ॒रान्वरु॑
णाय महि॒षान्बृह॒स्पत॑ये गव॒याँस्त्वष्ट्र॒ऽउष्ट्रा॑न् ॥ २८ ॥ प्र॒जाप॑तये
पुरु॑षान् ॥ प्र॒जाप॑तये॒ पुरु॑षान्ह॒स्तिन॒ऽआल॑भते वा॒चे प्लु॒षीँश्चक्षु॑षे
म॒शका॑ञ्छ्रोत्रा॑य॒ भृङ्गाः॑ ॥२९॥ शतम् ॥ १४०० ॥ प्र॒जाप॑तये च । वा॒य
वे च गोमृ॒गो वरु॑णायार॒ण्यो मे॒षो य॒माय॒ कृष्णो॑ मनु॒ष्य॒रा॒जाय॑ म॒र्कटः॑
शा॒र्दू॒लाय॑ रो॒हिद्वृ॑ष॒भाय॑ गव॒यी क्षि॑प्रश्ये॒नाय॑ वर्ति॑का॒ नील॑ङ्गोः॒ क्रिमिः॑ स

मुद्रायैशिशुमारोहिमवतेहस्ती ॥ ३० ॥ [ १० ] मयुःप्प्राजा
पत्त्यऽऊलोहलिक्ष्णोवृषदंशस्तेधात्रेदिशाङ्कङ्को
धुङ्क्षाग्नेयीकलविङ्कोलोहिताहिःपुष्करसादस्तेत्त्वाष्ट्रावाचेक्रुञ्चः ॥
॥ ३१ ॥ सोमायकुलङ्गः ॥ सोमायकुलङ्गऽआरण्योजोनकुलःशका
तेपौष्णाःक्रोष्टामायोरिन्द्रस्यगौरमृगःपिद्वोन्यङ्कुःकक्कटस्तेनुमत्त्यै
प्प्रतिश्श्रुत्कायैचक्रवाकः ॥ ३२ ॥ सौरीबलाका । शार्गःसृज
यःशयाण्डकस्तेमैत्राःसरस्वत्यैशारिःपुरुषवाक्श्वाविद्भौमीशार्दूलो
वृकःपृदाकुस्तेमन्यवेसरस्वतेशुकःपुरुषवाक् ॥ ३३ ॥ सुप

र्णऽपार्ज्जन्यः ॥ सुपर्णः पार्ज्जन्यऽआतिर्वाहसो दर्व्विदा तेवायवेबृह
स्पतयेवाचस्पतयेपैङ्गराजोलजऽआन्तरिक्षःप्लवोमद्गुर्म्मत्स्यस्तेनं
दीपतयेद्यावापृथिवीयः कूर्म्मः ॥ ३४ ॥ पुरुषमृगश्चन्द्रमसः ॥
पुरुषमृगश्चन्द्रमसोगोधाकालकादार्वाघाटस्तेवनस्पतीनाङ्कृकवाकुः
सावित्रोहंसोवातस्यनाक्रोमकरः कुलीपयस्तेकूपारस्यह्रियैशल्य
कः ॥ ३५ ॥ एण्यह्नः ॥ एण्यह्नोमण्डूकोमूषिकातित्तिरिस्तेस
र्प्पाणांल्लोपाशऽआश्विनःकृष्णोरात्र्याऽऋक्षोजतूः सुषिलीकातऽइतर
जनानाअहंकावैष्णवी ॥ ३६ ॥ अन्यवापोर्द्धमासानामृश्यो

मयूरः सुपर्णस्ते गन्धर्वाणामपामुद्रो मासां कश्यपो रोहित्कुण्डृणाची
गोलत्तिका ते ऽप्सरसां मृत्यवेऽसितः ॥ ३७ ॥ वर्षाहूर्ऋतूनाम् ॥ वर्षाहू
र्ऋतूनामाखुः कशो मान्थालस्ते पितृणां बलायाजगरो वसूनां कपिञ्ज
लः कपोत उलूकः शशस्ते निर्ऋत्यै वरुणायारण्यो मेषः ॥ ३८ ॥ श्वित्र
आदित्यानाम् ॥ श्वित्र आदित्यानामुष्ट्रो घृणीवान्वार्ध्रीनसस्ते म
त्या अरण्याय सृमरो रुरू रौद्रः क्वयिः कुटरुर्दात्यौहस्ते वाजिनां कामा
य पिकः ॥ ३९ ॥ खड्गो वैश्वदेवः । श्वा कृष्णः कर्णो गर्दभस्तरक्षुस्ते र
क्षसामिन्द्राय सूकरः सिंहो मारुतः कृकलासः पिप्पका शकुनिस्ते शर

व्यायैविश्वेषान्देवानांम्पृषुतः ॥ ४० ॥ [ ४ ] इतिश्रीवाजसनेयशु
क्लयजुःसंहितायांदीर्घपाठेचतुर्विंशोऽध्यायः ॥ २४ ॥ शादंदद्भिर्नवै
कैकाहिरण्यगर्भश्चतस्रआनोदशमानोमित्रोयदश्वस्याष्टकौयत्तेषाडि
मानुकंद्वेपंचदशसप्तचत्त्वारिंशत् ॥ ॐम् ॥ शादन्दद्भिः ॥ शादन्द
द्भिरवंकान्दन्तमूलैर्म्मृदुम्बस्वैस्तेगान्दंष्ट्राभ्याᳮसरस्वत्त्याऽअ
ग्रजिह्वञ्जिह्वायाऽउत्त्सादमवक्रन्देनुतालुवाजᳫहनुभ्यामपऽआ
स्येऽनुवृषणमाण्डाभ्यामादित्त्याँश्श्मश्रुभिःपन्थानम्भ्रूभ्यान्द्या
वापृथिवीवर्तोभ्यांविद्युतङ्कनीनकाभ्याᳮशुक्लायस्वाहाकृष्णायस्वा

हापार्य्याणिपक्ष्माण्यवार्य्याऽइक्षवोऽवार्य्याणिपक्ष्माणिपार्य्याऽइक्षवः
१॥ [ १ ] व्वातम्प्राणेनं ॥ व्वातम्प्राणेनापानेननासिकेऽउपयाममध
रेणौष्ठेनसदुत्तरेणप्प्रकाशेनान्तरमनूकाशेनबाह्यन्निवेष्ष्यम्मूर्द्धास्त्तन
यित्नुन्निर्ब्बाधेनाशनिम्मस्त्तिष्क्केणव्विद्युतङ्कनीनकाभ्याङ्कर्णाभ्याँ
श्रोत्रँश्रोत्राभ्याङ्कर्णौतेदनीमधरकण्ठेनापःशुष्क्ककण्ठेनचित्तम्म
न्याभिरदितिँशीर्ष्णानिर्ऋतिन्निर्ज्जर्ज्जल्प्येनशीर्ष्णासङ्क्रोशैः
प्प्राणान्रेष्माणँस्त्तुपेन॥२॥ [१] मशकान्केशैः॥ मशकान्केशैरि
न्द्रँस्वपसावहेनबृहस्प्पतिँशकुनिसादेनकूर्म्मान्छफैराक्रमणँ

स्थूराभ्यांमृक्षलाभिःकुपिञ्जलाश्रवअङ्घ्राभ्यामद्भ्यांनम्बाहुभ्यामा
म्बीलेनारण्यमग्निमतिरुग्भ्याम्पूषणन्दोर्भ्यामश्विनावꣳसाभ्या
ꣳरुद्रꣳरोराभ्याम्॥३॥[१]अग्नेःपक्षतिः॥अग्नेःपक्षतिर्वायोर्निपक्ष
तिरिन्द्रस्यतृतीयासोमस्यचतुर्थ्यदित्यैपञ्चमीन्द्राण्यैषष्ठीमरुताꣳ
सप्तमीबृहस्पतेरष्टम्यर्यम्णोनवमीधातुर्दशमीन्द्रस्यैकादशीव
रुणस्यद्वादशीयमस्यत्रयोदशी ॥४॥ [१] इन्द्राग्न्योःपक्षतिःसरस्व
त्यैनिपक्षतिर्मित्रस्यतृतीयापाञ्चतुर्थीनिर्ऋत्यैपञ्चम्यग्नीषोम
योःषष्ठीसर्पाणाꣳसप्तमीविष्णोरष्टमीपूष्णोनवमीत्वष्टुर्दशमीन्द्र

स्यैकादशीव्वरुणस्यद्द्वादशीयम्म्यैत्रयोदशीद्यावापृथिव्योर्द्दक्षिणम्पा

र्श्वंव्विश्श्वेषान्देवानामुत्तरम् ॥ ५ ॥ [ १ ] मरुताᳬस्कन्धाः ॥ मरुतां

ᳬस्कन्धाव्विश्श्वेषान्देवानाम्प्रथमाकीकसारुद्द्राणं द्द्वितीयादित्यानां

न्तृतीयाव्वायोः पुच्छमग्नीषोमयोर्भासदौक्क्रुञ्चौश्श्रोणिभ्यामिन्द्रा

बृहस्पतीऽऊरुब्भ्याम्मित्रावरुणावल्गाब्भ्यामाक्क्रमणᳬस्थूराब्भ्या

म्बलङ्कुष्ठाब्भ्याम् ॥ ६ ॥ [ १ ] पूषणंव्वनिष्ठुनान्धाहीन्त्स्थूलगुद

यासर्प्पान्गुदाभिर्व्विह्रुतऽआन्त्रैरपोव्वस्तिनाव्वृषणमाण्डाब्भ्यांव्वाजिन

ᳬशेपेनप्प्रजाᳬरेतसाचाषान्पित्तेनप्प्रदरान्पायुनाकूश्माञ्छकपि

ण्डै९ ॥ ७ ॥ [ १ ] इन्द्रस्यक्क्रोडः ॥ इन्द्रस्यक्क्रोडोदित्त्यैपाजु
स्यन्दिशांजुत्रवोदित्त्यैभुसज्जीमूतान्हृदयौपुशेनुान्तरिक्षम्पुरीततान
भऽउदुर्य्यैणंचक्कवुाकौमतंस्नाभ्यान्दिवंवृक्काभ्यांङ्गिरीन्प्लाशिभिरु
पंलान्प्लीह्हावुल्म्मीकांन्क्लोमभिग्ग्लौभिगुंल्म्मान्हिराभिःस्रवन्तीह्र
दान्कुक्षिभ्यांᳬसमुद्द्रमुदरेणवैश्वानुरम्भस्म्मना ॥ ८ ॥ [ १ ]
विधृतिन्नाभ्या । घृतᳬरसेनुापोयूष्णामरीचीर्व्विप्रुड्भिर्न्नीहारमूष्म्म
णांशीनंवसंयाप्पुष्वाऽअश्श्रुभिर्ह्रादुनीर्दूषीकाभिरुस्न्नारक्षांᳬसिचि
त्त्राण्यङ्गैर्न्नक्षत्राणिरूपेणंपृथिवीन्त्वचाजुम्बुकायुस्वाहा ॥ ९ ॥ [ १ ]

हिरण्यगर्भःसम् ॥ हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेक
ऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥
॥ १० ॥ यःप्राणत ॥ यःप्राणतोनिमिषतोमहित्वैकुऽइद्राजाजग
तोबभूव ॥ यऽईशेऽअस्यद्विपदश्चतुष्पदःकस्मैदेवायहविषाविधेम॥
॥ ११ ॥ यस्येमे । हिमवन्तोमहित्वायस्यसमुद्रꣳरसयासहाहुः ॥
यस्येमाःप्रदिशोयस्यबाहूकस्मैदेवायहविषाविधेम ॥ १२ ॥ यऽ
आत्मदा ॥ यऽआत्मदाबलदायस्यविश्वऽउपासतेप्रशिषंयस्य
स्यदेवाः॥ यस्यच्छायामृतंयस्यमृत्युःकस्मैदेवायहविषाविधेम॥

॥ १३ ॥ [ ४ ] आनंः ॥ आनोभुद्राःक्रतवोयन्तुविश्वतोदब्धासोऽअप
रीतासऽउद्भिदंः ॥ देवानोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदि
वेदिवे ॥ १४ ॥ देवानाम्भद्रा । सुमतिर्ऋजूयतान्देवानांᳬरातिरभि
नोनिवर्त्तताम् ॥ देवानांᳬसुख्यमुपसेदिमावयन्देवानऽआयुःप्र
तिरन्तुजीवसे ॥ १५ ॥ तान्पूर्वयानिविदाहूमहेवयम्भगम्मित्रमदि
तिन्दक्षमस्त्रिधम् ॥ अर्य्यमणंवरुणᳬसोममश्विनासरस्वतीनःसुभ
गामयस्करत् ॥१६॥ तन्नः ॥ तन्नोवातोमयोभुवातुभेषजन्तन्माताप्
थिवीतत्पिताद्यौः ॥ तद्ग्रावाणःसोमसुतोमयोभुवस्तदश्विनाशृणत

न्धिषण्ण्यायुवम् ॥१७॥ तमीशांनम् ॥ तमीशानुञ्जगंतस्तुस्त्थुषुस्प
तिंन्धियञ्जिन्न्वमवसेहूमहेवुयम्॥पूषानोयथावेदसामसद्वृधेरक्षितापा
युरदब्धःस्वुस्तये ॥१८॥ स्वुस्तिनः॥ स्वुस्तिनुऽइन्द्रोवृद्धश्रवाःस्वु
स्तिनःपूषाविश्ववेदाः ॥ स्वुस्तिनुस्ताक्ष्योंऽअरिष्टनेमिःस्वुस्तिनो
वृहस्पतिर्दधातु ॥ १९ ॥ पृषदश्वामुरुतः ॥ पृषदश्वामुरुतःपृश्नि
मातरःशुभंयावानोविदथेषुजग्मयः ॥ अग्निर्जिह्वामनवुःसूरचक्षसो
विश्वेनोदेवाऽअवुसागमन्निह ॥ २० ॥ भुद्रङ्कर्णेभिःश्रृणुयामदेवाभुद्र
म्पश्येमाक्षभिर्यजत्राः ॥ स्त्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि

देवहितंयदायुः ॥ २१ ॥ शतमित् ॥ शतमिन्नुशरदोऽअन्तिदे
वायत्त्रानश्चक्राजरसन्तनूनाम् ॥ पुत्रासोयत्त्रपितरोभवन्तिमानोम
द्ध्यारीरिषतायुर्गन्तोः ॥ २२ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदिति
र्म्मातासपितासपुत्त्रः ॥ विश्वेदेवाऽअदितिःपञ्चजनाऽअदितिर्जात
मदितिर्जनित्त्वम् ॥ २३ ॥ [ १० ] मानः ॥ मानोमित्त्रोवरुणोऽअ
र्य्यमायुरिन्द्रऽऋभुक्षामरुतःपरिक्ख्यन् ॥ यद्वाजिनोदेवजातस्यसप्ते
ःप्प्रवक्ष्यामोविदथेवीर्य्याणि ॥ २४ ॥ यन्निर्णिजा । यन्निर्णिजारेक्णसा
प्रावृतस्यरातिङ्गृभीताम्मुखतोनयन्ति ॥ सुप्प्राङजोमेम्म्यद्वि

श्वरूपऽइन्द्रापूष्णोः प्प्रियमप्प्येतिपार्थः ॥२५॥ एषच्छागः। पुरोऽ
अश्वेनव्वाजिनापूष्णोभागोनीयतेव्विश्वदेव्यः ॥ अभिप्प्रियंय्यत्पु
रोडाशमर्व्वतात्त्वष्टेदेनꣳसौश्श्रवसायजिन्वति ॥२६॥ यद्धविष्यम् ॥
यद्धविष्यमृतुशोदेवयानन्त्रिर्म्मानुषाःपर्य्यश्वन्नयन्ति। अत्रापूष्णः
प्प्रथमोभागऽएतियज्ञन्देवेब्भ्यःप्प्रतिवेदयन्नजः॥२७॥होताध्वर्युः।
होताध्वर्युरावयाऽअग्निमिन्धोग्ग्रावग्ग्राभऽउतशꣳस्तासुविप्प्रः ॥
तेनयज्ञेनस्वरङ्कृतेनस्विष्टेनव्वक्षणाऽआपृणद्ध्वम् ॥ २८ ॥ यूपव्रस्काऽ
उत ॥ येयूपवाहाश्चषालंय्येऽअश्वयूपायतक्षति ॥ येचार्व्वतेपचनꣳ

सुम्भरंन्त्यूतोतेषांमुभिगूर्तिर्न्वऽइन्वतु ॥ २९ ॥ उपप्प्र ॥ उपप्प्रागा
त्त्सुमन्न्मेंधायिमन्न्मंदेवानामाशाऽउपवीतपृष्ठः ॥ अन्न्वेंनंविप्प्राऽऋ
षयोमदन्तिदेवानांम्पुष्टेचंकृमासुवन्धम् ॥ ३० ॥ यद्वाजिनं॥ यद्वा
जिनोदामंसुन्दानमर्वतोयाशीर्षण्यारशनारज्जुंरस्य ॥ यद्वांघास्य
प्प्रभृंतमास्येतृण्ण्ठ्सर्व्वातातेऽअपिदेवेष्व्वंस्त्तु ॥ ३१ ॥ [ ८ ] यदश्श्वं
स्यक्क्रविषोमक्षिकाशयद्वास्वरौस्वधितौरिप्तमस्ति ॥ यद्धस्त्तयोः
शमितुर्य्यंन्नखेषुसर्व्वातातेऽअपिदेवेष्व्वंस्त्तु ॥ ३२ ॥ यदूवंद्ध्यम् ॥
यदूवंद्ध्यमुदरंस्यापवातियऽआमस्यंक्क्रविषोंगन्धोऽअस्त्तिसुकृतात

च्छमितारः॑कृण्वन्तूतमेधंशृतुपाकम्पचन्तु ॥३३॥ यत्ते ॥ यत्तेगात्रा
दुग्निनापुच्यमानादुभिशूलन्निहतस्यावुधावति ॥ मातद्भूम्म्यामा
श्रिषुन्मातृणेषुदेवेभ्युस्तदुशद्भ्योरातमस्तु ॥३४॥ येवाजिनम् ॥ ये
वाजिनम्परिपश्यन्तिपुक्वंयऽईमाहुः सुरभिर्निर्हरेति ॥येचार्वतोमा
सभिक्षामुपासंतऽउतोतेषामुभिगूर्तिर्नऽइन्वतु ॥३५॥ यन्नीक्षणम् ॥
यन्नीक्षणम्मांस्पचन्याऽउखायायापात्राणियूष्णऽआसेचनानि ॥
ऊष्मुण्यापिधानाचरूणामङ्काःसूनाःपरिभूषन्त्यश्वम् ॥ ३६ ॥
मात्त्वा ॥ मात्त्वाग्निर्ध्वनयीद्धूमगन्धिर्म्मोखाभ्राजन्त्युभिविक्तुज

गिंध्रः ॥ ड्रुष्टंवृीतमृभिगूंर्तुंवषंट्कृतुन्तन्देवासुःप्रतिंगृभ्णुन्त्यश्वंम् ॥
॥ ३७ ॥ निुक्रमंणान्निुषदंनम् ॥ निक्रमंणान्निुषदंनांविुवर्तंनुंठ्यच्चुपड्वीं
शुमर्वतः ॥ यच्चंपुपौयच्चंघासिंजुघासुसर्वृांतातेंऽआपिंदेुवेष्ष्वंस्तु ॥
॥ ३८ ॥ यदश्वांय ॥ यदश्वांयुवासंऽउपस्तृणन्त्यंधीवासंठ्याहिरं
ण्यान्यस्म्मैं॥सुन्दानुमर्वन्तुम्पड्वींशंप्प्रियादेुवेष्ष्वायांमयन्ति ॥३९॥
[८]यत्तेंसुादेमहंसाशूकृंतस्युपाष्णंयांवाुकशंयावातुतोदं ॥ स्त्रुचेवुता
हुविषोंऽअद्धुरेषुसर्वृांतातुब्रह्मंणासूदयामि॥४०॥चतुंस्त्रिंर्ठशद्वाजि
नंः ॥ चतुंस्त्रिंर्ठशद्वाजिनांदेुवर्बंन्धोर्वङ्कीरश्वंस्युस्वधितिंःसमेंति॥अ

च्छिद्रागात्रांवयुनांकृणोतुपरुंष्परुरनुघुष्याविशंस्त ॥४१॥ एकुस्त्व
ष्टुः ॥ एकुस्त्वष्टुरश्वंस्याविशुस्ताद्वायुन्तारांभवतुस्तथंऽऋतुः ॥ यातेृ
गात्रांणामृतथाकृणोमितातापिण्डांनाम्प्रजुंहोम्म्युग्नौ ॥४२॥ मात्त्वा
तपत्प्रियऽआत्माप्पियन्तुम्मास्वधितिस्तुन्वऽआतिष्ठिपत्ते ॥ माते
गृद्धुरविशुस्तातिहायच्छिद्रागात्राण्युसिनामिथूकः ॥४३॥ नवै ॥ न
वाऽउंऽएतन्म्रियसेनरिंष्यसिदेवाँ इदेंषिपुथिभिःसुगेभिः ॥ हरी
तेयुञ्जापृषंतीऽअभूतामुपास्थाद्वाजीधुरिरासंभस्य ॥४४॥ सुगव्यं
नः ॥ सुगव्यंन्नोवाजीस्वश्व्यम्पुंसःपुत्राँ२ऽउतविश्वापुषंरयिम् ॥

अनुगारत्त्वन्नोऽअदितिङ्कृणोतुक्षत्रन्नोऽअश्श्वोंव्वनताᳬहविष्म्मान् ।
॥ ४५ ॥ [ ६ ] इमानु । कम्भुवंनासीषधामेन्द्रश्चविश्श्वेचदेवाः ॥
आदित्त्यैरिन्द्रᳬसगणोमरुद्भिरस्म्मब्भ्यंम्भेषजाकरत् ॥ यज्ञञ्चनस्त
न्न्वञ्चप्प्रजाञ्चादित्त्यैरिन्द्रःसहसीषधाति ॥ ४६ ॥ अग्नेत्त्वन्नोऽअन्त
मऽउतत्त्राताशिवोभवावरूत्थ्यः ॥ वसुरग्निर्व्वसुश्श्रवाऽअच्छानक्षि
द्युमत्तमᳬरयिन्दाः ॥ तन्त्वाशोचिष्ठदीदिवᳬसुम्म्नायनूनमीमहेसखि
ब्भ्यः ॥४७॥ [ २ ] इतिवाजसनेयशुक्लयजुःसंहितायांपंचविंशोऽध्या
यः ॥ २५ ॥ [ १५ ] अग्निश्चपंचदशोच्चातएकादशद्वौषड्विंशतिः ।

ॐ अग्निश्च । पृथिवीचसन्नतेतेमेसन्नमतामदोवायुश्चान्तरिक्षञ्चस
न्नतेतेमेसन्नंमतामदऽआदित्यश्चद्यौश्चसन्नतेतेमेसन्नंमतामदऽआप
श्चवरुणश्चसन्नतेतेमेसन्नंमतामदः ॥ सप्तसꣳसदोऽअष्टमीभूतसा
धनी ॥ सकामाꣳ ॥ अद्ध्वनस्कुरुसञ्ज्ञानमस्तुमेमुना ॥ १ ॥ यथेमा
म् ॥ यथेमांवाचङ्कल्ल्याणीमावदानिजनेभ्यः ॥ ब्रह्मराजन्न्याभ्या
ꣳशूद्रायचार्य्यायचस्वायचारणायच ॥ प्प्रियोदेवानान्दक्षिणायैदा
तुरिहभूयासमयम्मेकामःसमृद्ध्यतामुपमादोनमतु ॥ २ ॥ बृहस्प
तेऽअति ॥ बृहस्पतेऽअतियदर्य्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु॥

यद्दीदयुच्छवंसऽऋतप्प्रजातुतदुस्म्मासुद्रविंणन्धेहिचित्रम् ॥ उपयुा
मगृंहीतोसिबृहुस्प्पतंयेत्त्वैषतेयोनिर्बृहुस्प्पतंयेत्त्वा ॥ ३ ॥ इन्द्रगो
मंन् ॥ इन्द्रुगोमंन्निहायांहिपिबुासोमंᳬशतक्रतो ॥ विद्याद्भिर्ग्ग्रावंभिः
सुतम् ॥ उपयुामगृंहीतुोसीन्द्रांयत्त्वुागोमंतऽएषतेयोनिरिन्द्रांयत्त्वा
गोमंते ॥ ४ ॥ इन्द्रायांहि ॥ इन्द्रायांहिवृत्रहृन्पिबुासोमंᳬशतक्रतो ॥
गोमंद्भिर्ग्ग्रावंभिःसुतम् ॥ उपयुामगृंहीतुोसीन्द्रांयत्त्वुागोमंतऽएषते
योनिरिन्द्रांयत्त्वुागोमंते ॥ ५ ॥ ऋुतावांनंवैश्वानुरम् ॥ ऋुतावांनंवै
श्वानुरमृुतस्युज्ज्योतिंषुस्प्पतिंम् ॥ अजंस्रङ्घर्म्ममीमहे ॥ उपयुामगृं

हीतोसिवैश्वानुरायंत्त्वैषतुयोनिर्वैश्वानुरायंत्त्वा ॥ ६ ॥ वैश्वानुर
स्यंसुमुतौ । स्यामुराजाहिकुम्भुवंनानामभिुश्रीः ॥ इतोजुातोवि
श्वंमिुदंविचंष्टेवैश्वानुरोयंततुसूर्य्येण ॥ उपुयामगृंहीतोसिवैश्वानुरा
यंत्त्वैषतुयोनिर्वैश्वानुरायंत्त्वा ॥ ७ ॥ वैश्वानुरोनंः ॥ वैश्वानुरो
नंऽऊतयुऽआप्रयांतुपरुावतंः ॥ अुग्निरुक्थेनुवाहंसा ॥ उपुयामगृंही
तोसिवैश्वानुरायंत्त्वैषतुयोनिर्वैश्वानुरायंत्त्वा ॥ ८ ॥ अुग्निर्ऋषिंः ॥
अुग्निर्ऋषिुःपवंमानुःपाञ्चंजन्यःपुरोहितः ॥ तमीमहेमहागुयम् ॥ उ
पुयामगृंहीतोस्युग्नयेंत्त्वावर्च्चंसऽएषतुयोनिरुग्नयेंत्त्वावर्च्चंसे ॥ ९ ॥

मुहाँ२ इन्द्रं॑ ॥ मुहाँ२ इन्द्रोवज्रंहस्तःषोडशीशर्म्मयच्छतु ॥ हन्तुंपाप्मानंयोस्मान्द्वेष्टि ॥ उपयामगृहीतोसिमहेन्द्रायंत्त्वैषतेयोनिर्म्महेन्द्रायंत्त्वा ॥ १० ॥ तंवं॑ ॥ तंवोंदुस्ममृतीषहंवसोर्म्मन्दानमन्धसः ॥ अभिवत्सन्नस्वसरेषुधेनवऽइन्द्रंगीर्भिन्नवामहे ॥ ११ ॥ यद्वाहिष्ठम ॥ यद्वाहिष्ठन्तदग्गनयेबृहदर्च्चविभावसो ॥ महिषीवत्त्वद्रयिस्त्वद्वाजाऽउदीरते ॥ १२ ॥ एहि ॥ एह्यूषुब्रवाणितेग्ग्नऽइत्थेतरागिरं॑ ॥ एभिर्वर्द्धासऽइन्दुभिः ॥ १३ ॥ ऋतवस्ते ॥ ऋतवस्तेयज्ञंवितन्वन्तुमासारक्षन्तुतेहविः ॥ संवत्सरस्तेयज्ञन्दधातुनःप्रजाश्च

परिपातुनः ॥ १४ ॥ उपह्वरेगिरीणाम् ॥ उपह्वरेगिरीणाꣳसङ्गमेच

नदीनाम् ॥ धियाविप्रोऽअजायत ॥ १५ ॥ [ १५ ] उच्चाते ॥ उच्चा

तेजातमन्धसोदिविसद्भूम्म्यादंदे ॥ उग्रꣳशर्म्ममहिश्रवः ॥ १६ ॥

सनः ॥ सनऽइन्द्राययज्यवेवरुणायमरुद्भ्यः ॥ वरिवोवित्परिस्रव ॥

॥ १७ ॥ एनाविश्वानि ॥ एनाविश्वान्यर्य्यऽआद्युम्नानिमानु

षाणाम् ॥ सिषासन्तोवनामहे ॥ १८ ॥ अनुवीरैः ॥ अनुवीरैरनुपु

ष्यास्मगोभिरन्वश्वैरनुसर्वेणपुष्टैः ॥ अनुद्विपदानुचतुष्पदावय

न्देवानोयज्ञमृतुथानयन्तु ॥ १९ ॥ अग्नेपत्नीः ॥ अग्नेपत्नीरि

हावंहदेवानांमुशुतीरुपं ॥ त्त्वष्टांरुꣳसोमंपीतये ॥ २० ॥ अुभियुज्ञ
म् ॥ अुभियुज्ञङ्गृणीहिनोग्नावोनेष्टुःपिबंऽऋतुनां ॥ त्त्वꣳहिरंत्त्नुधाऽ
अंसिं ॥ २१ ॥ द्रविणोदाःपंपीषति । जुहोतुप्प्रचंतिष्ठत ॥ नेष्ट्राद्दृतु
भिरिष्ष्यत ॥ २२ ॥ तवायम् ॥ तवायꣳसोमुस्त्त्वमेह्यर्वाङ्शश्व
त्तुमꣳसुमनांऽअुस्यपाहि ॥ अुस्स्मिन्त्युज्ञेबुर्हिष्ष्यानिषद्यांदधिुष्ष्वे
मञ्जुठरुऽइन्दुंमिन्द्र ॥ २३ ॥ अुमेवंनः ॥ अुमेवंनःसुहवाऽआहिग
न्तंनुनिवुर्हिषिसदतनारणिष्टन ॥ अथांमन्दस्स्वजुजुषाणोऽअन्धंसु
स्त्त्वष्टंर्द्देवेभिुर्ज्जनिंभिःसुमद्गंणः ॥ २४ ॥ स्वादिष्ठ्या ॥ स्वादिष्ठ्या

मदिंष्ठ्यापवस्वसोमधारया ॥ इन्द्रायपातवेसुतः ॥ २५ ॥ रक्षोहा
विश्वचर्षणिरभियोनिमयोहते ॥ द्रोणेसधस्थमासदत् ॥ २६ ॥
[ ११ ] ॥ २ ॥ इतिशुक्लयजुःसंहितायांषड्विंशतितमोऽध्यायः ॥२६॥
समास्त्वादशोद्वाअस्यपीवोअन्नाद्वादशकावभिस्त्वैकादशचत्वारःपं
चचत्वारिंशत्॥ ॐसमास्त्वा ॥ समास्त्वाग्नऽऋतवोवर्द्धयन्तुसंव
त्सराऽऋषयोयानिसत्या ॥ सन्दिव्येनदीदिहिरोचनेनविश्वाऽआ
भाहिप्रदिशश्चतस्रः॥ १ ॥ सञ्चे ॥ सञ्चेद्धयस्वाग्नेप्रचबोधयैनमुच्चै
स्तिष्ठमहतेसौभगाय॥माचरिषदुपसत्तातेऽअग्नेब्रह्माणस्तेयशसःस

न्तुमाह्ये ॥ २ ॥ त्वामंग्ने ॥ त्वामंग्नेवृणतेब्राह्मुणाऽइमेशिवोऽअंग्ने
संवरंणेभवानः ॥ सुपुत्क्राहानोऽअभिमातिजिद्धुस्वेगयेजागृह्यप्र
युच्छन् ॥ ३ ॥ इहैव ॥ इहैवाग्नेऽअधिधारयारयिम्मात्वानिक्रन्पू
र्वचितोंनिकारिणः ॥ क्षत्रमंग्नेसुयमंमस्तुतुब्भ्यंमुपसत्तावंर्द्धतान्तेऽ
अनिष्टृतः ॥ ४ ॥ क्षत्रेणाग्ने ॥ क्षत्रेणाग्नेस्वायुःसंरंभस्वमित्रेणा
ग्नेमित्रधेयेयतस्व ॥ सजातानांम्मद्ध्यमस्त्थाऽएंधिराज्ञांमग्नेविह
व्योदीदिहीह ॥ ५ ॥ अतिनिहः ॥ अतिनिहोऽअतिस्त्रिधोत्यचित्ति
मत्त्यरातिमग्ने ॥ विश्वाह्यग्नेदुरितासहस्वाथास्म्मब्भ्यंसहवी

राछंरुयिन्दाः ॥ ६ ॥ अनाधृष्ष्योजातवेदाः ॥ अनाधृष्ष्योजातवे
दाऽअनिष्टृतोविराडग्नेक्षत्रभृद्दीदिहीह ॥ विश्वाऽआशाःप्प्रमुञ्च
न्मानुषीर्भियःशिवेभिरुद्यपरिंपाहिनोवृधे ॥ ७ ॥ बृहस्प्पतेसवि
तः ॥ बृहस्प्पतेसवितर्बोधयैनुठसठशितञ्चित्सन्तराछंसठशिशाधि॥
वुर्द्धयैनम्महतेसौभगायविश्वऽएनमनुमदन्तुदेवाः ॥ ८ ॥ अमुत्त्रभू
यादधं ॥ अमुत्त्रभूयादधयद्यमस्यबृहस्प्पतेऽअभिशस्त्तेरमुञ्चः ॥ प्र
त्यौहतामश्विनामृत्त्युमस्म्माद्देवानामग्ग्नेभिषजाशचीभिः ॥ ९ ॥
उद्वयम् ॥ उद्वयन्तमसस्प्परिस्वःपश्यन्तऽउत्तरम् ॥ देवन्देवत्त्रासु
२७

स्युमगंन्मुज्ज्योतिरुत्तमम् ॥ १० ॥ [ १० ] ऊर्द्धाऽअंस्यसुमिधोभव
न्त्यूर्द्धाशुक्राशोचींᳬंष्युग्नेः ॥ द्युमत्तंमासुप्प्रतींकस्यसूनोः ॥११॥
तनूनपादसुरः ॥ तनूनपादसुरोविश्ववेंदादुवोदेवेषुदेवः ॥ पुथोऽअं
नक्तुमद्ध्वाघृतेनं ॥१२॥ मद्ध्वायज्ञम् ॥ मद्ध्वायुज्ञन्नक्षसेप्प्रीणानोनरा
शᳬंसोऽअग्ने ॥ सुकृद्देवᳬंसविताविश्ववारः ॥ १३ ॥ अच्छायम् ॥
अच्छायमेति शर्वसाघृतेनेंडानोवह्निर्नमंसा ॥ अग्निᳬंस्रुचोऽअ
द्ध्वरेषुप्प्रयत्सु ॥ १४ ॥ सयंक्षत् ॥ सयंक्षदस्यमहिमानंमुग्नेःसऽईं
म्मुन्द्रासुप्प्रयसंः ॥ वसुश्चेतिंष्ठोवसुधातंमश्च ॥१५॥ द्वारोदेवीः ॥

द्वारोदेवीरन्वस्य विश्वेव्रतादंदन्तेऽअग्ने॥ उरुव्यचंसोधाम्नापत्त्यं
माना॥१६॥ शतम् १५०० ॥ तेऽअस्य ॥ तेऽअस्युयोषणेदिव्येनयो
नाऽउषासानक्ता ॥ इमंय्यज्ञमंवतामद्ध्वरन्नंः ॥ १७॥ दैव्याहोतारा।
ऊर्द्ध्वमंद्ध्वरन्नोग्नेर्जिह्वामुभिगृणीतम् ॥ कृणुतन्नुःस्विष्टिम् ॥ १८ ॥
तिस्रोदेवीः ॥ तिस्रोदेवीर्बर्हिरेदक्सदन्त्विडासरस्वतीभारती ॥ मही
गृणाना ॥ १९ ॥ तन्नः॥तन्नस्तुरीपमद्भुतम्पुरुक्षुत्त्वष्टासुवीर्यम् ॥
रायस्पोषंव्विष्यतुनाभिमुस्मे ॥ २० ॥ वनस्पतेवसृजाररांण
स्त्मनादेवेषु ॥ अग्निर्हव्यक्शमितासूदयाति ॥ २१ ॥ अग्नेस्वा

हां । कृणुहिजातवेदइऽन्द्रायहव्यम् ॥ विश्वेदेवाहविरिदञ्जुषन्ताम् ॥
॥ २२ ॥ [ १२ ] पीवोऽअन्नारयिवृधः । सुमेधाःश्वेतःसिषक्ति
नियुतामभिश्रीः ॥ तेवायवेसमनसोवितस्थुर्विश्वेन्नरःस्वपत्त्या
निचक्रुः ॥२३॥ रायेनु । यञ्जज्ञतूरोदसीमेरायेदेवीधिषणाधातिदे
वम् ॥ अधवायुन्नियुतःसश्चतस्वाऽउतश्वेतंवसुधितिन्निरेके ॥ २४ ॥
आपोह॥आपोहयद्बृहतीर्विश्वमायन्गर्भन्दधानाजनयन्तीरग्निम् ॥
ततोदेवानाᳫंसमवर्त्ततासुरेकःकस्मैदेवायहविषाविधेम ॥ २५ ॥ य
श्चित् ॥ याश्चिदापोमहिनापर्य्यपश्यद्दक्षन्दधानाजनयन्तीर्यज्ञम् ॥

योदेवेष्वधिदेवऽएकऽआसीत्कस्मैदेवायहविषाविधेम॥२६॥ प्रया
भिः ॥ प्रयाभिर्य्यासिदाश्वाꣳसमच्छानियुद्भिर्वायविष्टयेदुरोणे ॥
निनोरयिꣳसुभोजसंय्युवस्वनिवीरङ्गव्यमश्व्यंश्चराधः ॥ २७ ॥
आनः ॥ आनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञ
म् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिःसदानः ॥
॥ २८ ॥ नियुत्त्वान्वायो ॥ नियुत्त्वान्वायवागह्ययꣳशुक्रोऽअया
मिते ॥ गन्तासिसुन्वतोगृहम् ॥ २९ ॥ वायोशुक्रः ॥ वायोशुक्रोऽ
अयामितेमध्वोऽअग्ग्रदिविष्टिषु ॥ आयाहिसोमपीतयेस्पार्होदेवनि

युत्वंता ॥ ३० ॥ वायुरंग्ग्रेगाः ॥ वायुरंग्ग्रेगायंज्ञप्प्रीःसाकङ्गन्मनं सायज्ञम् ॥ शिवोनियुद्भिः शिवाभिः॥३१॥वायोये। तेंसहस्त्रिणोरथां सुस्तोभिरागंहि ॥ नियुत्त्वान्त्सोमंपीतये ॥ ३२ ॥ एकंयाच । दुश भिश्चस्वभूतेद्वाभ्यांमिष्टयेंविंशतीचं ॥ तिसृभिश्चवहंसेत्रिंशतांचनियुद्भिर्वायविहताविमुंञ्च ॥ ३३ ॥ तवंवायो ॥ तवंवायवृतस्पतेत्त्वष्टुर्ज्जामातरद्भुत ॥ अवाꣳस्यावृंणीमहे ॥३४॥[१२]॥ अभित्त्वां । शूरनोनुमोदुग्ग्धाइवधेनवंः ॥ ईशांनमुस्यजगंतःस्वर्दृशमीशांनमिन्द्रतस्त्थुषंः॥ ३५ ॥ नत्त्वावांन् ॥ नत्त्वावां २ अन्न्योदि

स्योनपार्थिवोनजातोनजनिष्यते ॥ अश्वायन्तोमघवन्निन्द्रवा
जिनोगुव्यन्तस्त्वाहवामहे ॥ ३६ ॥ त्वामित् ॥ त्वामिद्धिहवामहे
सातौवाजस्यकारवः ॥ त्वांवृत्रेष्विन्द्रसत्पतिन्नरस्त्वाङ्काष्ठास्ववं
तः ॥ ३७ ॥ सत्वम् ॥ सत्वन्नश्चित्रवज्रहस्तधृष्णुयामहस्तवा
नोऽअद्रिवः ॥ गामश्वंरथ्यमिन्द्रसङ्किरसत्रावाजन्नजिग्युषे ॥
॥३८॥ कयानः ॥ कयानश्चित्रऽआभुवदूतीसदावृधःसखा ॥ कया
शचिष्ठयावृता ॥ ३९॥ कस्त्वा । सत्योमदानाम्मंहिष्ठोमत्सदन्ध
सः ॥ दृढाचिदारुजेवसु ॥ ४० ॥ अभीषुणः ॥ अभीषुणःसखीना

मविताजरितृणाम् ॥ शतम्भवास्यूतये ॥ ४१ ॥ यज्ञायज्ञावऽ ॥ यज्ञा
यज्ञावोऽअग्नयेगिरागिराचदक्षसे ॥ प्रप्रवयममृतञ्जातवेदसम्प्रिय
म्मित्रन्नशꣳसिषम् ॥ ४२ ॥ पाहिनः ॥ पाहिनोऽअग्नऽएकयापाह्यु
तद्वितीयया ॥ पाहिगीर्भिस्तिसृभिरूर्ज्जाम्पतेपाहिचतसृभिर्वसो
॥ ४३ ॥ ऊर्ज्जोनपातम् ॥ ऊर्ज्जोनपातꣳसहिनायमस्म्मयुर्दाशेम
हव्यदातये ॥ भुवद्वाजेष्ष्वविताभुवद्वृधऽउतत्त्राताततूनाम् ॥ ४४ ॥
संवत्सरोसि ॥ परिवत्सरोसीदावत्सरोसीद्वत्सरोसिवत्सरोसि ॥
उषसस्तेकल्प्पन्तामहोरात्रास्तेकल्प्पन्तामर्द्धमासास्तेकल्प्पन्ता

म्मासांस्तेकल्पन्तामृतवंस्तेकल्पन्ताᳯसंव्वत्सरस्तेकल्पताम् ॥
प्रेत्याऽएत्त्यैसञ्चाञ्चप्प्रचंसारय ॥ सुपुर्णोचिदंसितयादेवतंयाङ्गिरुस्व
द्ध्रुवर्सीद॥४५॥[११]इतिशुक्लयजुःसंहितायांसप्तविंशोध्यायः॥२७॥
होतायक्षदेकादशदेवंबर्हिर्द्धादशपुनरप्येवंचत्त्वारःषट्चत्त्वारिᳯशत् ॥
ॐ होतांयक्षत्॥होतांयक्षत्त्सुमिधेन्द्रमिडस्पदेनाभांपृथिव्याऽअधिं॥
दिवोव्वर्ष्मन्त्समिंद्ध्यतऽओजिष्ठश्चर्षणीसहांव्वेत्त्वाज्ज्यस्यहोतर्य्यंज
॥ १ ॥ होतांयक्षत्तनूनपांतमूतिभिं ॥ होतांयक्षत्तनूनपांतमूतिभिर्ज्जे
तांरमपंराजितम् ॥ इन्द्रंन्देवᳯस्वर्व्विदम्पथिभिर्म्मधुमत्तमैर्न्नराशᳯसं

नुतेजंसाव्वेत्त्वाज्ज्यंस्यहोतुर्य्यंज॥२॥होतांयक्षदिडाभिरिन्द्रम् ॥होतां
यक्षदिडाभिरिन्द्रमीडितमाजुह्वानममंर्त्त्यम् ॥देवोदेवैःसवीर्य्यौवज्ज्र
हस्तःपुरन्दरोव्वेत्त्वाज्ज्यंस्यहोतुर्य्यंज ॥ ३ ॥ होतांयक्षद्बर्हिषीन्द्रम्॥
होतांयक्षद्बर्हिषीन्द्रन्निषद्वरंवृषभन्नर्य्यापसम् ॥ व्वसुभीरुद्रैरादित्यैः
सयुग्भिर्बर्हिरासंदद्वेत्त्वाज्ज्यंस्यहोतुर्य्यंज ॥४॥ होतांयक्षदोजोनवी
र्य्यंᳬसहोद्वारऽइन्द्रमवर्द्धयन् ॥ सुप्रायुणाऽअस्मिन्यज्ञेविश्रयन्ता
मृतावृधोद्वारऽइन्द्रायमीढुषेव्यन्त्वाज्ज्यंस्यहोतुर्य्यंज ॥५॥ होतांय
क्षदुषेऽइन्द्रस्य। धेनूसुदुघेमातरामही ॥ सवातरौनतेजंसावृत्समि

न्द्रंमवर्द्धतांव्वीतामाज्ज्यंस्युहोतुर्य्यंज ॥ ६ ॥ होतांयक्षुद्दैव्याहोतांरा
भिषजासखांयाहुविषेन्द्रंम्भिषज्ज्यतः ॥ कुवीदेवौप्प्रचेतसाविन्द्रांय
धत्तऽइन्द्रियंव्वीतामाज्ज्यंस्युहोतुर्य्यंज ॥७॥ होतांयक्षत्तिस्रोदेवीः॥
होतांयक्षत्तिस्रोदेवीन्नभेषजन्त्रयंस्त्रिधातंवोपसुऽइडासरंस्वतीभार
तीमुहीः॥ इन्द्रंपत्नीर्हुविष्मतीव्र्यन्त्वाज्ज्यंस्युहोतुर्य्यंज ॥८॥ हो
तांयक्षुत्त्वष्टांरुमिन्द्रंम ॥ होतांयक्षुत्त्वष्टांरुमिन्द्रन्देवम्भिषजंᳬसुयज
ङ्घृतुश्श्रियंम्॥पुरुरूपंᳬसुरेतंसम्मुघोनुमिन्द्रांयुत्त्वष्टादधंदिन्द्रिया
णिवेत्त्वाज्ज्यंस्युहोतुर्य्यंज ॥ ९ ॥ होतांयक्षुद्वनुस्प्पतिंᳬशमितारंम्॥

होता॑यक्ष॒द्वन॒स्प॑तिँ॑ शमि॒तार॑ꣳ श॒तक्र॑तु॒न्धियो॒जो॒ष्टार॑मिन्द्रि॒यम् ॥
मध्वा॑सम॒ञ्जन्प॒थिभि॑ः सु॒गेभि॒ःस्वदा॑ति य॒ज्ञम्मधु॑ना घृ॒तेन॒ वेत्वाज्य॑
स्य॒ होत॒र्यज॑ ॥ १० ॥ होता॑यक्ष॒दिन्द्र॑ꣳ स्वाहा॑ ॥ होता॑यक्ष॒दिन्द्र॑ꣳ
स्वाहाज्य॑स्य॒ स्वाहा॒ मेद॑सु॒ स्वाहा॑ स्तो॒काना॑ꣳ स्वाहा॒ स्वाहा॑कृतीना॒
ꣳस्वाहा॑ ह॒व्यसू॑क्तीनाम् ॥ स्वाहा॑ दे॒वाऽआ॑ज्य॒पा जु॑षा॒णाऽइन्द्र॒ऽआ
ज्य॑स्य व्यन्तु॒ होत॒र्यज॑ ॥ ११ ॥ [ ११ ] दे॒वम्ब॒र्हिरिन्द्र॑ꣳ सु॒दे॒वन्दे॒वै
र्वी॒रव॑त्स्ती॒र्णं वेद्या॑मवर्द्धयत् ॥ वस्तो॑र्वृ॒तम्प्राक्तो॑र्भृ॒तꣳ रा॒याब॒र्हिष्म॑
तो॒ऽत्य॑गाद्वसु॒वने॑ वसु॒धेय॑स्य वे॒तु यज॑ ॥ १२ ॥ दे॒वीर्द्वार॑ः ॥ दे॒वीर्द्वार॒ऽइन्द्र

ष्टसङ्घातेद्वीद्वीऽर्थामन्नवर्द्धयन् ॥ आवृत्तसेनुतरुणेनकुमारेणच्चमीवता
पार्वाणँरेणुकङ्काटन्नुदन्तांवसुवनेवसुधेयस्यव्यन्तुयज ॥ १३ ॥ देवी
ऽउपासानक्ता ॥ देवीऽउषासानक्तेन्द्रंऽयज्ञेप्रयत्यह्वेताम् ॥ दैवीर्वि
शःप्रायासिष्टांऽसुप्रीतसुधितेवसुवनेवसुधेयस्यवीतांऽयज ॥१४॥
देवीजोष्ट्री ॥ देवीजोष्ट्रीवसुधितीदेवमिन्द्रमवर्द्धताम् ॥ अयांव्यन्या
घाद्वेषांऽस्यान्यावक्षद्वसुवार्याणियजमानायशिक्षितेवसुवनेवसुधेयं
स्यवीतांऽयज ॥ १५ ॥ देवीऽऊर्जाहुती ॥ देवीऽऊर्जाहुतीदुघेसुदु
घेपयसेन्द्रमवर्द्धताम् ॥ इषमूर्जमन्यावक्षत्सग्धिंसपीतिमन्या

नवेनपूर्वंदयमानेपुराणेनत्वमधातामूर्जमूर्जाहुतीऽऊर्जयमानेवसु
वार्याणियजमानायशिक्षितेवसुवनेवसुधेयस्यवीतांयज ॥ १६ ॥
देवादैव्या ॥ देवादैव्याहोतारादेवमिन्द्रमवर्द्धताम् ॥ हतावशसा
वाभार्ष्टांवसुवार्याणियजमानायशिक्षितौवसुवनेवसुधेयस्यवीतांय
ज ॥ १७ ॥ देवीस्तिस्रः ॥ देवीस्तिस्रस्तिस्रोदेवीःपतिमिन्द्रम
वर्द्धयन् ॥ अस्पृक्षद्भारतीदिवंरुद्रैर्यज्ञंसरस्वतीडावसुमतीगृहा
न्वसुवनेवसुधेयस्यव्यन्तुयज ॥ १८ ॥ देवऽइन्द्रः ॥ देवऽइन्द्रोन
राशंसस्त्रिवरूथस्त्रिवन्धुरोदेवमिन्द्रमवर्द्धयत् ॥ शतेनशितिपृष्ठा

नुमाहितऽसुहस्त्रैणप्प्रवर्त्ततेमित्रावरुणेदंस्यहोत्रमर्हतोबृहस्प्पतिस्तो
त्रमुश्विनाद्ध्वर्य्यवंवसुवनेंवसुधेयंस्यवेतुयज ॥ १९ ॥ देवोदेवैः ॥ देवो
देवैर्व्वनुस्प्पतिर्हिरंण्यपर्णोमधुंशाखऽसुपिप्पुलोदेवमिन्द्रंमवर्द्धयत् ॥ दि
वुमग्ग्रेणास्पृक्षुदान्तरिक्षम्पृथिवीमंदृ६हीद्वसुवनेंवसुधेयंस्यवेतुयज ॥
॥ २० ॥ देवम्बुर्हिः ॥ देवम्बुर्हिर्व्वारितीनान्देवमिन्द्रंमवर्द्ध
यत् ॥ स्वासुस्त्थमिन्द्रेणासंन्नमुन्न्याबुर्हीं६ष्युभ्यभूद्वसुवनेंवसु
धेयंस्यवेतुयज ॥ २१ ॥ देवाऽअग्निः ॥देवोऽअग्निःस्विष्टकृद्देवमिन्द्र
मवर्द्धयत् ॥ स्विष्टकुर्व्वन्त्स्विष्टकृत्स्विष्टमुद्यकंरोतुनोवसुवनेंवसुधेयं

स्यवेतुयज ॥ २२ ॥ अग्निमद्य ॥ होतारमवृणीतायंयजमानुःप
चुन्पक्तीःपचन्पुरोडाशम्बुद्धन्निन्द्रायुच्छागम् ॥ सूपुस्थाऽअद्यदे
वोवनस्पतिरभवुदिन्द्रायुच्छागेन ॥ अघुतम्मेदुस्तःप्रतिपचुता
ग्रभीदवीवृधत्पुरोडाशेन ॥ त्वामुद्यऽऋषे ॥ २३ ॥ [ १२ ] होता
यक्षत् ॥ होतायक्षत्समिधानम्महद्यशुःसुसमिद्धुवरेण्यमुग्निमिन्द्रं
वयोधसम् ॥ गायुत्रीच्छन्दऽइन्द्रियन्त्र्यविङ्गांवयोदधुद्वेत्वाज्ज्यस्य
होतुर्यज ॥२४॥ होतायक्षुत्तनूनपातमुद्भिदम् ॥ होतायक्षुत्तनूनपात
मुद्भिदुंयज्ञम्भुमदितिर्दधेशुचिमिन्द्रंवयोधसम् ॥ उष्णिहुञ्छन्दऽइ

न्द्रियन्दित्त्युवाहङ्गांव्वयोदधुद्धेत्त्वाज्ज्यंस्युहोतुर्य्यंज ॥ २५ ॥ होता
यक्षदीडेन्यमीडितम् ॥ होतायक्षदीडेन्यमीडितंव्वृत्रहन्तमुमिडाभि
रीड्यर्ठ्ठसहःसोममिन्द्रंव्वयोधसम् ॥ अनुष्टुभुञ्छन्दऽइन्द्रियम्पञ्चा
विङ्गाव्वयोदधुद्धेत्त्वाज्ज्यंस्युहोतुर्य्यंज ॥ २६ ॥ होतायक्षत्त्सुबर्हिषं
म्पूषुण्वन्तम् ॥ होतायक्षत्त्सुबर्हिषम्पूषुण्वन्तममर्त्त्यर्ठ्ठसीदन्तम्बर्हि
षिप्प्रियेमृतेन्द्रंव्वयोधसम् ॥ बृहतीच्छन्दऽइन्द्रियन्त्रिवृत्सङ्गांव्वयोद
धुद्धेत्त्वाज्ज्यंस्युहोतुर्य्यंज ॥ २७ ॥ होतायक्षद्व्यचस्वतीःसुप्प्रायु
णा८ ॥ होतायक्षद्व्यचस्वतीःसुप्प्रायुणाऽऋतावृधोद्वारोदेवीर्हिरण्ययी

ब्रह्माणमिन्द्रंवयोधसम् ॥ पङ्क्तिश्छन्दऽइहेन्द्रियन्तुर्य्यवाहङ्गांवयो
दधद्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ २८ ॥ होतायक्षत्सुपेशसासुशि
ल्पे । बृहतीऽउभेनक्तोषासानदर्शतेविश्वमिन्द्रंवयोधसम् ॥ त्रि
ष्टुभञ्छन्दऽइहेन्द्रियम्पष्ठवाहङ्गांवयोदधद्वीतामाज्ज्यस्यहोतर्य्यज ॥
॥ २९ ॥ होतायक्षत्प्रचेतसादेवानामुत्तमंयशोहोतारादैव्याकवीस
युजेन्द्रंवयोधसम् ॥ जगतीश्छन्दऽइन्द्रियमनड्वाहङ्गांवयोदधद्वीता
माज्ज्यस्यहोतर्य्यज ॥ ३० ॥ होतायक्षत्पेशस्वतीस्तिस्रः ॥ होता
यक्षत्पेशस्वतीस्तिस्रोदेवीर्हिरण्ययीर्भारतीर्बृहतीर्म्महीःपतिमिन्द्रं

वयोधसंम् ॥ द्विराजुञ्छन्दंऽइहेन्द्रियन्धेनुङ्गान्नवयोदधुहृयन्त्वाज्ज्य
स्युहोतुर्य्यजं ॥ ३१ ॥ होतांयक्षत्त्सुरेतंसुन्त्वष्टांरम् ॥ होतांयक्षत्त्सु
रेतंसुन्त्वष्टांरंपुष्टिवर्द्धनंᳩरूपाणिबिभ्रंतुम्पृथक्पुष्टिमिन्द्रंवयोधसं
म् ॥ द्विपदुञ्छन्दंऽइन्द्रियमुक्षाणङ्गान्नवयोदधुहृत्त्वाज्ज्यंस्युहोतुर्य्य
जं ॥ ३२ ॥ होतांयक्षद्वनुस्पतिंᳩशमितारंम् ॥ होतांयक्षद्वनुस्प
तिंᳩशमितारंᳩशुतक्रंतुᳩहिरंण्यपर्णमुक्थिनंᳩरशनाम्बिभ्रंतंवृशि
म्भगमिन्द्रंवयोधसंम् ॥ ककुभुञ्छन्दंऽइहेन्द्रियंवुशांवेहतङ्गांवयोद
धुहृत्त्वाज्ज्यंस्युहोतुर्य्यजं ॥ ३३ ॥ होतांयक्षत्त्स्वाहांकृतीरुग्निम् ॥

होतांयक्षुत्स्वाहांकृतीरुग्निङ्गृहपंतिम्पृथुग्ग्वरुंणम्भेषुजङ्कुविङ्क्षुत्रमिन्द्रं
व्वयोधसंम् ॥ अतिच्छन्दसुऽच्छन्दंऽइन्द्रियम्बृहद्दृषुभङ्गांव्वयोदधुद्द्व्य
न्त्वाज्ज्यंस्युहोतुर्य्यंज॥३४॥[११]देवम्बुर्हिः॥ देवम्बुर्हिर्व्वयोधसंन्दे
वमिन्द्रंमवर्द्धयत् ॥ गायुत्र्याच्छन्दंसेन्द्रियञ्चक्षुरिन्द्रेव्वयोदधंद्वसुवने
वसुधेयंस्यव्वेतुयज ॥३५॥ देवीर्द्वारंः ॥ देवीर्द्वारोंव्वयोधसुᳬशुचिमिन्द्रं
मवर्द्धयन् ॥ उष्णिहाच्छन्दंसेन्द्रियम्प्राणमिन्द्रेव्वयोदधंद्वसुवनेंव्वसु
धेयंस्यव्यन्तुयज ॥ ३६ ॥ देवीऽउषासानक्ता । देवमिन्द्रंव्वयोधसं
न्देवीदेवमंवर्द्धताम् ॥ अनुष्टुभाच्छन्दंसेन्द्रियम्बलमिन्द्रेव्वयोदधंद्द

सुवनेवसुधेयस्यवीतांयज ॥ ३७ ॥ देवीजोष्ट्री ॥ देवीजोष्ट्रीवसुधि
तीदेवमिन्द्रंवयोधसन्देवीदेवमवर्द्धताम् ॥ बृहत्याच्छन्दसेन्द्रियꣳ
श्रोत्रमिन्द्रेवयोदधद्वसुवनेवसुधेयस्यवीतांयज ॥ ३८ ॥ देवीऽऊर्जाहु
ती ॥ देवीऽऊर्जाहुतीदुघेसुदुघेपयसेन्द्रंवयोधसन्देवीदेवमवर्द्धताम् ॥
पङ्क्त्याच्छन्दसेन्द्रियꣳशुक्रमिन्द्रेवयोदधद्वसुवनेवसुधेयस्यवीताँय्यज
॥ ३९ ॥ देवादैव्या ॥ देवादैव्याहोतारादेवमिन्द्रंवयोधसन्देवौदेव
मवर्द्धताम् ॥ त्रिष्टुभाच्छन्दसेन्द्रियन्त्विषिमिन्द्रेवयोदधद्वसुवनेव
सुधेयस्यवीतांयज॥४०॥देवीस्तिस्रः ॥ देवीस्तिस्रस्तिस्रोदेवीर्वयो

धसुम्पतिमिन्द्रमवर्द्धयन् ॥ जगत्याच्छन्दसेन्द्रियꣳशूषमिन्द्रेवयोद
धद्वसुवनेवसुधेयस्यव्यन्तुयज ॥४१॥देवोनराशꣳसः॥देवोनराशꣳसो
देवमिन्द्रंवयोधसन्देवोदेवमवर्द्धयत् ॥ विराजाच्छन्दसेन्द्रियꣳरूप
मिन्द्रेवयोदधद्वसुवनेवसुधेयस्यवेतुयज ॥ ४२ ॥ देवोवनस्पतिः ॥
देवोवनस्पतिर्देवमिन्द्रंवयोधसन्देवोदेवमवर्द्धयत् ॥ द्विपदाच्छन्द
सेन्द्रियम्भगमिन्द्रेवयोदधद्वसुवनेवसुधेयस्यवेतुयज ॥ ४३ ॥ देव
म्बर्हिः ॥ देवम्बर्हिर्वारितीनान्देवमिन्द्रंवयोधसन्देवन्देवमवर्द्धयत् ॥
ककुभाच्छन्दसेन्द्रियꣳयशइन्द्रेवयोदधद्वसुवनेवसुधेयस्यवेतुयज ॥

॥ ४४ ॥ देवोऽअग्निः । स्विष्टकृद्देवमिन्द्रं वयोधसं देवो देवमवर्द्धयत् ॥ अतिच्छन्दसा छन्दसेन्द्रियं क्षत्रमिन्द्रे वयो दधद्वसुवने वसुधेयस्य व्वेतु यज ॥ ४५ ॥ अग्निमद्य । होतारमवृणीतायं यजमानः पचन्पक्तीः पचन्पुरोडाशम्बध्नन्निन्द्राय वयोधसे छागम् ॥ सूपस्था ऽअद्य देवो व्वनस्पतिरभवदिन्द्राय वयोधसे छागेन ॥ अघत्तम्मेदस्तः प्रति पचताग्ग्रभीदवीवृधत्पुरोडाशेन ॥ त्वामद्य ऽऋषे ॥४६॥ [१२]

॥ इति श्रीवाजसनेयशुक्लयजुःसंहितायामष्टाविंशोऽध्यायः ॥ २८ ॥

समिद्धो अग्नेकादश यदक्रंदस्त्रयोदश समिद्धो अद्य द्वादश केतुं कृण्वं.

श्चत्त्वारःषष्टिः॥ॐसमिद्धोऽअञ्जन्॥समिद्धोऽअञ्जन्कृदरम्मतीनाङ्घृ
तमग्नेमधुमत्पिन्वमानः ॥ व्वाजीवहन्व्वाजिनञ्जातवेदोदेवानांव्वक्षि
प्प्रियमासुधस्त्थम् ॥ १ ॥ घृतेनाञ्जन् ॥ घृतेनाञ्जन्त्सम्पथोदेवया
नान्प्रजानन्व्वाज्ज्यप्येतुदेवान् ॥ अनुत्त्वासप्तेप्प्रदिशःसचन्ताᳬं
स्वधामस्म्मैयजमानायधेहि ॥ २ ॥ ईड्यश्च ॥ ईड्यश्चासिवन्द्य
श्चव्वाजिन्नाशुश्चासिमेद्ध्यश्चसप्ते ॥ अग्निष्ट्वादेवैर्व्वसुभिःसजोषाः
प्प्रीतंव्वह्निंवहतुजातवेदाः ॥ ३ ॥ स्तीर्णम्बर्हिः ॥ सुष्टरीमाजुषाणो
रुपृथुप्प्रथमानम्पृथिव्याम् ॥ देवेभिर्युक्तमदितिःसजोषाःस्योनङ्कृ



ण्वानासुविंतेदंधातु ॥ ४ ॥ एताऽउंवंः । सुभगांव्विश्वरूंपाव्विपक्षों
भिंःश्रयंमाणाऽउदातैंः ॥ क्रुष्ष्वाःसुतीःक्कुवषुंःशुम्भंमानाद्वारोंदेवीः
सुंप्प्रायुणाभंवन्तु ॥ ५ ॥ अन्तुरामित्राविरुंणा ॥ अन्तुरामित्राविरुंणा
चंरन्तीमुखंय्युज्ञानांमुभिसंव्विदाने ॥ उषासांवाॅंसुहिरण्ण्येसुंशि
ल्प्पेऽक्रृतस्युयोनांविहसांदयामि ॥ ६ ॥ प्रुथुमावांम् ॥ प्रथुमावांॅं
सरुथिनांसुवणांदेवौपश्यंन्तौभुवनानिव्विश्श्वां ॥ अपिंप्प्रयुश्चोदंना
वाम्मिमांनाहोतांराज्ज्योतिंःप्प्रुदिशांदिशन्तां ॥७॥ आदित्त्यैर्न्नंः ॥
आदित्यैर्न्नोभारंतीवष्टुयुज्ञंसरंस्वतीसुहरुद्रैर्न्नंऽआंवीत् ॥ इडोपंहू





ताव्वसुंभिःसुजोषांयुज्ञन्नोंदेवीरुमृतैषुधत्त ॥ ८ ॥ त्त्वष्टांव्वीरम् ॥ त्त्व
ष्टांव्वीरन्देवकांमअजानुत्त्वष्टुरर्व्वांजायतऽआशुरश्श्वः ॥ त्त्वष्ट्टेदंव्विश्श्वु
म्भुवंनअजानब्बुहोःकुर्त्तारंमिहयंक्षिहोतः ॥ ९ ॥ अश्श्वोंघृतेनुत्त्म
न्न्युासमंक्तुःउपंदेवाँऽऋतुशःपाथंऽएतु ॥ व्वनुस्प्पतिर्देवलोकम्प्र
जानन्नुग्ग्निनांहुव्व्यास्वंदितानिंव्वक्षत् ॥ १० ॥ प्रजापंतुस्त्तपंसा । व्वा
वृधानःसुद्योजातोदंधिषेयुज्ञमंग्ने ॥ स्वाहांकृतेनहुविषांपुरोगायाहि
साद्ध्याहविरंदंतुदेवाः॥११॥[११] यदक्रंन्दः। प्प्रथमञ्जायंमानऽउुद्य
न्त्समुद्रादुतवापुरींषात् ॥ श्येनस्यंपुक्षाहंरिणस्यंबाहूऽउंपस्त्तुत्त्युम्म

हिंजातन्तेऽअर्वन् १२॥यमेनदुत्तम्॥यमेनंदुत्तान्त्रितऽएंनमायुनगिन्द्रं
ऽएणम्प्रथमोऽअद्ध्यंतिष्ठत् ॥ गन्धर्वोऽअंस्यरशनामंगृभ्णात्सूराद
श्वंवसवोनिरंतष्ट ॥ १३ ॥ असियमः ॥ असियमोऽअस्यांदित्यो
ऽअर्वन्नसित्रितोगुह्येनव्रतेन ॥ असिसोमेनसमयाविपृक्तऽआहुस्ते
त्रीणिदिविबन्धनानि ॥ १४ ॥ त्रीणिते ॥ त्रीणितऽआहुर्दिविबन्धना
नित्रीण्यप्सुत्रीण्यन्तःसमुद्रे ॥ उतेवमेवरुणश्छन्त्स्यर्वन्यत्रांतऽआ
हुःपरमञ्जनित्रम् ॥ १५ ॥ इमाते । वाजिन्नवमार्जनानीमाशफानां
ᳪसनितुर्निधानां ॥ अत्रांतेभद्रारशनाऽअपश्यमृतस्ययाऽअभिरक्ष

न्तिगोपाः ॥ १६ ॥ आत्मानन्ते ॥ आत्मानन्तेमनसारादजा
नामवोदिवापतयन्तम्पतङ्गम् ॥ शिरोऽअपश्यम्पथिभिःसुगेभिररे
णुभिर्जेहमानम्पतत्रि ॥ १७ ॥ अत्राते । रूपमुत्तममपश्यञ्जिगी
षमाणमिषऽआपदेगोः ॥ यदातेमर्तोऽअनुभोगमानडादिद्ग्रसिष्ठऽओ
षधीरजीगः ॥ १८ ॥ अनुत्वा ॥ अनुत्वारथोऽअनुमर्य्योऽअर्वन्ननु
गावोनुभगःकनीनाम् ॥ अनुव्रातासस्तवसख्यमीयुरनुदेवाममि
रेवीर्यन्ते ॥ १९ ॥ हिरण्यशृङ्गोयः ॥ हिरण्यशृङ्गोयोऽअस्यपा
दामनोजवाऽअवरऽइन्द्रऽआसीत् ॥ देवाऽइदस्यहविरद्यमायन्योऽअ


॥२३०॥

वृन्तम्प्रथुमोऽअुद्धयतिंष्ठत् ॥ २० ॥ ईम्मान्तांसुऽसिलिकमद्धय
मासः ॥ ईम्मान्तांसुऽसिलिंकमद्धयमासुंऽसर्द्दशूरंणासोदिव्यासोऽ
अत्त्याः ॥ हुंऽसाऽईवश्श्रेणिशोयंतन्तेयदाक्षिंषुर्दिव्यमज्ज्मुमश्वाः ॥
॥ २१ ॥ तवुशरीरम् ॥ तवुशरीरम्पतयिष्णवृर्व्वुन्तवंचित्तंव्वातंऽइवुद्ध
जीमान् ॥ तवुशृङ्गांणिविष्ठितापुरुत्रारंण्येषुजर्भुराणाचरन्ति ॥२२॥
उपुप्प्र ॥ उपुप्प्रागाच्छसंनंव्वाज्यर्वादेवुद्रीचामनंसादीद्धयानः ॥ अु
जःपुरोनीयतेनाभिरुस्यानुपुश्चात्कुवयोयन्तिरेभाः ॥ २३ ॥ उपु
प्प्र ॥ उपुप्प्रागात्त्परुमंयत्त्सुधस्त्थमर्व्वाँऽअच्छापितरम्मातरंश्च ॥

अग्वादेवाअुष्टंतमोहिगम्म्याऽअथाशांस्तेदाशुषेवार्याणि ॥ २४ ॥
[ १३ ] समिद्धोऽअद्य । मनुंषोदुरोणेदेवोदेवान्यंजसिजातवेदः ॥
आचुवहंमित्रमहश्चिकित्वान्त्वन्दूतःकुविरासिप्प्रचेताः ॥ २५ ॥ श
तम् ॥ १६०० ॥ तनूंनपात्पथः ॥ तनूंनपात्पुथऽकृतस्ययानाम्मद्ध्वां
समुञ्जन्त्स्वंदयासुजिह्व ॥ मन्मांनिधीभिरुतयुज्ञमृन्धन्देंवुत्राचंकृण
ह्यध्वरन्नः ॥ २६ ॥ नराशꣳसंस्यमाहिमानंम् ॥ नराशꣳसंस्यमाहि
मानंमेषामुपंस्तोषामयजुतस्यंयुज्ञैः ॥ येसुक्रतंवःशुचंयोधियन्धाः
स्वदंन्तिदेवाऽउभयांनिहव्या ॥२७॥ आजुह्वांनुऽईड्यंः॥आजुह्वांनुऽ

ईडचोनन्द्युश्चायांह्व्यग्नेवसुभिःसुजोषाः ॥ त्वन्देवानामसियह्वहो
तासऽएनान्यक्षीषितोयजीयान् ॥ २८ ॥ प्राचीनम्बुर्हिः । प्प्रदिशा
पृथिव्याव्वस्तोरुस्याव्वृज्यतेऽअग्ग्रेऽअन्हाम् ॥व्युप्प्रथतेवितुरंव्वरीयो
देवेभ्योऽअदितयेस्योनम् ॥ २९ ॥ व्यचस्वतीरुर्व्विया । व्विश्रयं
न्ताम्पतिभ्योनजनंयुःशुम्भमानाः ॥ देवीर्द्वारोवृहतीर्व्विश्वमिन्वादे
वेभ्योभवतसुप्प्रायणाः ॥ ३० ॥ आसुष्वयन्ती । यजुतेऽउपाकेऽ
उषासानक्कासदतान्नियोनौ ॥ दिव्येयोषणेवृहतीसुरुक्मेऽअधिश्रि
यंशुक्रपिशन्दधाने ॥ ३१ ॥ दैव्याहोतारा । प्प्रथमासुवाचामिमा

नायुज्ञम्मनुषोयजंद्ध्यै ॥ प्रचोदयन्ताविदथेषुकारूप्राचीनुञ्योतिः
प्प्रदिशांदिशन्ता ॥ ३२ ॥ आनः ॥ आनोयुज्ञम्भारंतीतूयमेत्त्वि
डांमनुष्ष्वदिहचेतयन्ती ॥ तिस्रोदेवीर्बुर्हिरेदथंस्योनंऽसरस्वतीस्व
पंसꣳसदन्तु ॥ ३३ ॥ यऽइमे । द्यावांपृथिवीजनित्रीरूपैरपिंꣳशुद्धुव
नानिविश्वा ॥ तमुद्यहोतारमिषितोयजीयान्देवन्त्वष्टारमिहयक्षिविद्वा
न् ॥ ३४ ॥ उपावसृजुत्त्वमन्त्या । समुञ्जन्देवानाम्पाथऽऋतुथाहवी
थंषि ॥ वनुस्पतिःशमिताद्देवोऽअग्निःस्वदन्तुहव्यम्मधुनाघृतेन ॥
॥३५॥ सद्योजातः॥सद्योजातोव्यमिमीतयुज्ञमग्निर्देवानामभवत्पु

रोगाः॥ अस्यहोतुः प्प्रदिश्यृतस्यंवाचिस्वाहांकृतर्ठ्हविरंदन्तुदेवाः॥
॥ ३६ ॥ [ १२ ] केतुङ्कृण्वन् ॥ केतुङ्कृण्वन्नकेतवेपेशोमर्य्याऽअपेश
से ॥ समुषद्भिरजायथाः ॥ ३७॥ जीमूतस्येवभवति ॥ जीमूतस्येव
भवतिप्प्रतीकंय्यद्वर्म्मीयातिसमदामुपस्त्थे ॥ अनाविद्धयातन्न्वाजय
त्वर्ठ्सत्त्वावर्म्मणोमहिमापिपर्त्तु ॥ ३८ ॥ धन्न्वनागाः॥ धन्न्वनागाध
न्न्वनाजिञ्जयेमधन्न्वनातीव्राःसमदोजयेम ॥ धनुःशत्रोरपकामङ्कृणो
तिधन्न्वनासर्व्वाःप्प्रदिशोजयेम ॥३९॥ वक्ष्यन्तीवेत्॥वक्ष्यन्तीवेदा
गनीगन्तिकर्ण्णम्प्रियर्ठ्सखायम्परिषस्वजाना ॥ योषेवशिङ्क्तेवितता

धिधन्वुश्याऽइयꣳसमंनेपारयंन्ती४०॥तेऽआचरंन्ती॥तेऽआचरंन्ती
समंनेवुयोषांमातेवंपुत्रम्बिभृतामुपस्त्थे ॥ अपुशत्रूंन्विद्ध्यताꣳसं
विदानेऽआर्त्नीऽइमेविष्फुरन्तीऽअमित्रांन् ॥४१॥ बुह्वीनाम्पिता ।
बुहुरंस्यपुत्राश्चिुश्चाकृंणोतिसमंनावुगत्यं ॥ इषुधिःशङ्काःपृतंनाश्च्च
सर्वाःपृष्ठेनिनंद्धोजयतिप्प्रसूंतः ॥ ४२ ॥ रथेतिष्ठंन् ॥ रथेतिष्ठंन्नयति
वाजिनंःपुरोयत्रंयत्रकामयंतेसुषारथिः ॥ अभीशूंनाम्महिमानंम्पना
यतुमनंःपुश्चादनुंयच्छान्तिरश्मयंः ॥ ४३ ॥ तीव्रान्घोषांन् ॥ ती
व्रान्घोषांन्कृण्वतेवृषंपाणयोश्वारथेभिःसुहवाजयंन्तः ॥ अवक्रामं

न्तुऽप्रपदैरमित्त्रान्क्षिणन्तुशत्रूँरनपव्ययन्तः ॥ ४४ ॥ रथवाहं
णर्ठहविः ॥ रथवाहणर्ठहविरस्यनामयत्रायुधन्निहितमस्यवर्म्म ॥ त
त्रारथमुपशग्मर्ठसदेमविश्वाहावयर्ठसुमनस्यमानाः ॥ ४५ ॥ स्वा
दुषर्ठसदःपितरः ॥ स्वादुषर्ठसदःपितरोवयोधाःकृच्छ्रेश्रितःशक्ती
वन्तोगभीराः ॥ चित्रसेनाऽइषुबलाऽअमृध्राःसतोवीराऽउरवोव्रातसा
हाः ॥ ४६ ॥ ब्राह्मणासःपितरः ॥ ब्राह्मणासःपितरःसोम्यासः
शिवेनोद्यावापृथिवीऽअनेहसा ॥ पूषानःपातुदुरितादृतावृधोरक्षामा
किर्नोऽअघशर्ठसऽईशत ॥४७॥ सुपर्णंवस्ते । मृगोऽअस्यादन्तोगो

भिंऽसन्नंद्धापततिप्प्रसूंता ॥ यत्रानरंऽसञ्चविचुद्दवंन्तितत्रास्म्मव्भ्यु
मिषंवुंऽशम्मंयऽसन् ॥ ४८ ॥ ऋजीतेपरिं ॥ वृङ्‌ग्धिनोऽस्म्मांभवतन
स्तुनूः ॥ सोमोऽअधिंब्रवीतुनोदिंतिंऽशम्मंयच्छतु ॥ ४९ ॥ आजंङ्घ
न्ति ॥ आजंङ्घन्तिसान्वेषाञ्जघनाँऽउपंजिघ्नते ॥ अश्श्वाजनि
प्प्रचेतसोऽश्श्वान्त्समत्सुंचोदय ॥ ५० ॥ अहिंरिवभोगैः पर्य्येतिबाहु
ञ्ज्यायांहेतिम्पंरिबाधंमानः ॥ हस्तघ्नोविश्श्वांवयुनांनिविद्वान्पुमान्पु
मांसम्परिपातुविश्श्वतः ॥ ५१ ॥ वनंस्प्पतेवीड्वङ्ग ॥ वनंस्प्पतेवीडु
ङ्गोहिभूयाऽअस्म्मत्त्संखाप्प्रतरणःसुवीरः ॥ गोभिंऽसन्नंद्धोऽअसिवी

उपयंस्वास्त्थातातेंजयतजेत्वानि ॥ ५२ ॥ दिवःपृथिव्याः ॥ दिवः
पृथिव्याःपर्योजऽउद्भृतंवनस्पतिभ्यःपर्याभृतꣳसहः ॥ अपामो
ज्मानम्परिगोभिरावृतमिन्द्रस्यवज्रꣳहविषारथंयज ॥ ५३ ॥ इ
न्द्रस्यवज्रः ॥ इन्द्रस्यवज्रोमरुतामनीकम्मित्रस्यगर्भोवरुणस्य
नाभिः ॥ सेमान्नोहव्यदातिञ्जुषाणोदेवरथप्प्रतिहव्यागृभाय ॥५४॥
उपश्वासय । पृथिवीमुतद्याम्पुरुत्रातेमनुतांविष्ठितञ्जगत् ॥ सदु
न्दुभेसजूरिन्द्रेणदेवैर्दूराद्दवीयोऽअपसेधशत्रून् ॥ ५५ ॥ आक्रन्दय ॥
आक्रन्दयबलमोजोनऽआधानिष्टनिहिदुरिताबाधमानः ॥ अपप्प्रोथ

दुन्दुभेदुच्छुनाऽइतऽइन्द्रंस्यमुष्टिरंसिवीडयंस्व ॥५६॥ आमूः ॥ आ
मूरंजप्प्रत्त्यावंर्तयेमाः केतुमद्दुन्दुभिर्वावदीति ॥ समश्श्वंपर्णाश्चरं
न्तिनोनरोस्म्माकंमिन्द्ररथिनोजयन्तु ॥ ५७ ॥ आग्नेयःकृष्णग्ग्रीं
वः । सारस्वतीमेषिबभ्रुःसौम्म्यःपौष्णःश्यामःशितिपृष्ठोबार्हस्प
त्त्यः शिल्पोवैश्श्वदेवऽऐन्द्रोरुणोमारुतःकुल्म्माषंऽऐन्द्राग्नःसंᳫहि
तोधोरामःसावित्रोवारुणःकृष्णऽएकशितिपात्त्पेत्त्वः ॥ ५८ ॥ अ
ग्नयेनींकवते ॥ अग्नयेनींकवतेरोहिताञ्जिरनड्वानधोरामौसावित्रौ
पौष्णौरंजतनाभीवैश्श्वदेवौ पिशङ्गौतूपरौमारुतःकुल्म्माषंऽआग्ने

यऽकृष्णोजऽसारस्वतामेषीवारुणऽपेत्वः ॥ ५९ ॥ अग्नयेगायत्रा
य । त्रिवृतेराथन्तरायाष्टाकपालऽइन्द्रायत्रैष्टुभायपञ्चदशायबार्हताये
कादशकपालोविश्वेभ्योदेवेभ्योजागतेभ्यऽ सप्तदशेभ्योवैरूपे
भ्योद्वादशकपालोमित्रावरुणाभ्यामानुष्टुभाभ्यामेकविंशाभ्यां
वैराजाभ्यांपयस्याबृहस्पतयेपाङ्क्तायत्रिणवाय शाक्वरायचरुऽसवित्र
ऽऔष्णिहायत्रयस्त्रिंशायरैवतायद्वादशकपालऽप्राजापत्यश्चरुर
दित्यैविष्णुपत्न्यैचरुरग्नयेवैश्वानराय द्वादशकपालोनुमत्याऽ
अष्टाकपालऽ ॥ ६० ॥ [२४] ॥ ४ ॥ इति श्रीशुक्लयजुःसंहितापाठे एकोन

त्रिंशोऽध्यायः॥ २९ ॥ देवसवितः षट्तपसेकौलालꣳषोडशद्वौद्वाविꣳ
शातः॥ ॐदेवंसवितः॥ देवंसवितुःप्प्रसुंवयुज्ञम्प्रसुंवयुज्ञपंतिम्भगाय॥
दिव्योगंन्धुर्व्वःकेतुपूःकेतंन्नःपुनातुव्वाचस्प्पतिर्व्वाचंन्नःस्वदतु ॥ १ ॥ त
त्सवितुः ॥ तत्सवितुर्व्वरेण्यम्भर्गोदेवस्यंधीमहि ॥ धियोयोनःप्प्र
चोदयांत् ॥ २ ॥ विश्वांनिदेव । सवितर्दुरितानिपरांसुव ॥ यद्भद्रन्त
न्नऽआसुंव ॥३॥ विभुक्तारꣳहवामहे ॥ विभुक्तारꣳहवामहेव्वसोश्चित्र
स्यराधसः ॥ सवितारंन्नृचक्षसम् ॥ ४ ॥ ब्रह्मणेब्राह्मणम् ॥ ब्र
ह्मणेब्राह्मणङ्क्षत्रायंराजन्यम्मरुद्भ्योवैश्यन्तपसेशूद्रन्तमंसे तस्कं

रन्नारकायंव्वीरुहणम्पाप्मनेक्क्लीवमाक्क्रयायाऽअयोगूङ्कामायपुँश्चलूम
तिक्क्रुष्टायमागधम् ॥ ५ ॥ नृत्तायसूतम् ॥ नृत्तायसूतङ्गीतायशैलूं
षन्धर्म्मायसभाचुरन्नरिष्ठायैभीमुलन्नर्म्मायरेभर्ठहसायु कारिमानु
न्दायस्त्रीषुखम्प्रमदेकुमारीपुत्रम्मेधायैरथकारन्धैर्य्यायुतक्क्षाणम् ॥
॥ ६ ॥ [ ६ ॥ तपसेकौलालम् ॥ तपसेकौलालम्मायायैकर्म्मारर्ठरू
पायमणिकारर्ठशुभेवुपर्ठशरुव्यायाऽइषुकारर्ठहेत्त्यै धनुष्कारङ्कर्म्मणे
ज्याकारन्दिष्टायरज्जुसर्जम्मृत्यवेमृगयुमन्तकायश्वनिनम् ॥ ७ ॥
नदीब्भ्यःपौञ्जिष्ठम् ॥ नदीब्भ्यःपौञ्जिष्ठमृक्षीकाब्भ्योनैषादम्पुरुष

व्याग्घ्रायं दुर्म्मदं ङ्गन्धर्व्वाप्सरोब्भ्यो व्व्रात्त्यंम्प्रयुग्भ्यऽउन्मंत्तꣳ सर्प्पदे वजनेब्भ्यो प्प्रतिपदमयेब्भ्यः कितवमीर्य्यताया ऽअकितवम्पिशाचेब्भ्यो विदलकारीं य्यातुधानेब्भ्यः कण्टकीकारीम् ॥ ८ ॥ सुन्धये जारम् ॥ सुन्धये जारङ्गेहायोपपतिमार्त्यै परिवित्तन्निर्ऋत्यै परिविविदानमराद्ध्या ऽएदिधिषुः पतिन्निष्कृत्त्यै पेशस्कारीꣳ सञ्ज्ञानाय स्म्मरकारीम्प्रकामोद्यायोपसदंव्वर्णायानुरुधम्बलायोपदाम् ॥ ९ ॥ उत्त्सादेब्भ्यः कुब्जम् ॥ उत्त्सादेब्भ्यः कुब्जम्प्रमुदे व्वामनन्द्वार्ब्भ्यः स्स्रामꣳ स्वप्नायान्धमधर्म्मायबधिरम्पवित्त्रायाभिषजम्प्रज्ञानायनक्षत्रदर्शमाशि

क्षायैप्प्रश्श्निनमुपशिक्षायांऽअभिप्प्रश्श्निनम्मर्य्यादायैप्प्रश्श्नविवाक
म् ॥ १० ॥ अर्म्मेब्भ्योहस्तिपम् ॥ अर्म्मेब्भ्योहस्तिपञ्जवायांश्श्व
पम्पुष्ट्यैगोपालंव्वीर्य्यायाविपालन्तेजसेजपालमिरायैकीनाशङ्कीला
लायसुराकारम्भद्रायगृहपंश्श्रेयसेवित्तधमाद्ध्यक्ष्यायानुक्षत्तारम्
॥ ११ ॥ भायैदार्व्वाहारम् ॥ भायैदार्व्वाहारम्प्रभायांऽअग्न्येधम्ब्रध्न
स्यंव्विष्टपायाभिषेक्तारंव्वर्षिष्ठायनाकायपरिवेष्टारन्देवलोकायपेशिता
रम्मनुष्ष्यलोकायप्प्रकरितारᳬसर्व्वेब्भ्योलोकेब्भ्यंऽउपसेक्तारमवंऽ
ऋत्यैवधायोपमन्थितारम्मेधायव्वासःपल्पूलीम्प्रकामायरजयित्री

म् ॥ १२ ॥ ऋतयेस्तेनहृदयम् ॥ ऋतयेस्तेनहृदयंवैरंहत्यायपिशु
नंविविक्त्यैक्षत्तारमौपद्रष्ट्यायानुक्षत्तारम्बलायानुचरम्भूम्नेपरिष्कु
न्दम्प्रियायप्रियवादिनमरिष्ट्याऽअश्वसादᳪ स्वर्गायलोकायभा
गदुघंवर्षिष्ठायनाकायपरिवेष्टारम् ॥ १३ ॥ मन्यवेयस्तापम् ॥ म
न्यवेयस्तापङ्क्रोधायनिसरᳪ योगायशोक्तारᳪ शोकायाभिसर्त्तारङ्क्षेमा
यविमोक्तारमुत्कूलनिकूलेभ्यस्त्रिष्ठिनंवपुषेमानस्कृतᳪ शीलायाञ्ज
नीकारीन्निर्ऋत्यैकोशकारीय्यमायासूम् ॥ १४ ॥ यमायंयमसूम् ॥
यमायंयमसूमथर्वभ्योवतोकाᳪ संवत्सरायपर्य्यायिणीम्परिवत्सरा

यविंजातामिदावत्त्सुरायातीत्त्वरीमिद्वत्त्सुरायातिष्कद्वरींवत्त्सुराय
विर्जर्ज्जराꣳसँवत्त्सुरायपलिक्कनीमृभुब्भ्योंजिनसुन्धꣳसाद्ध्येब्भ्य
श्चर्म्मम्म्नम् ॥ १५ ॥ सरोब्भ्योधैवरम् ॥ सरोब्भ्योधैवरमुपस्त्था
वराब्भ्योदाशंवैशन्ताब्भ्योवैन्दन्नंड्वलाब्भ्यःशौष्कलम्पारायमागार
संवारायकैवर्तन्तीर्थेब्भ्यऽआन्दंविषमेब्भ्योमैनालꣳस्वनेब्भ्यःपर्ण्णं
कुहाब्भ्यःकिरातꣳसानुब्भ्योजम्भकम्पर्वतेब्भ्यःकिम्पूरुषम् ॥
॥ १६ ॥ वीभत्सायैपौल्कसम् ॥ वीभत्सायैपौल्कसंवर्णायहिरण्य
कारन्तुलायैवाणिजम्पश्चादोषायग्ग्लाविनंविश्वेब्भ्योभूतेब्भ्य÷

सिध्मुलम्भूत्यैंजागरणमभूत्यैस्वपुनमात्यैजनवादिनंव्यृद्ध्याऽअप
गुल्भꣳसंशुरायंप्प्रच्छिदम् ॥ १७ ॥ अक्षराजायंकितुवम् ॥
अक्षराजायंकितुवङ्कृतायांदिनवदुर्शन्त्रेतायैकुल्पिनन्द्वापरायाधिकु
ल्पिनमास्कुन्दायसभास्थाणुम्मृत्यवेंगोव्युच्छमन्तकायगोघात
ङ्क्षुधेयोगांविकृन्तन्तम्भिक्षमाणऽउपतिष्ठंतिदुष्कृतायचरकाचार्य
म्पाप्मनेसैलगम् ॥ १८ ॥ प्रतिश्श्रुत्कांयाऽअर्तनम् ॥ प्रतिश्श्रु
त्कांयाऽअर्तनङ्घोषायभुषमन्तायबहुवादिनमनन्तायमूकꣳशब्दाया
डम्बराघातम्महसेवीणावादङ्क्रोशायतूणवध्ममवरस्परायशङ्खध्मं

वनांयवनुपमुन्यतौरण्यायदावुपम् ॥१९॥नुम्मांयपुँश्चुलूम् ॥ नुम्मां
यपुँश्चुलूंहसांयुकारिंठ्यादंसेशावुल्ल्याङ्गांमुण्युङ्गणंकमभिङ्कोशंकु
न्ताम्महंसेवुीणावादम्पांणिग्घ्नन्तूंणवुंस्मन्तान्नृत्तायांनुन्दायंतलवम्
॥ २० ॥ अुग्नयेपीवांनम् ॥ अुग्नयेपीवांनम्पृथिव्यैपीठसुर्प्पिणंवाय
वेंचाण्डालमुन्तरिंक्षायवंशनुर्तिनांन्दिवेखंलतिं सूर्य्यांयहर्य्युंक्षन्नक्ष
त्रेभ्यःकिर्म्मिरञ्चुन्द्रमंसेकिलासुमहेशुक्कम्पिङ्गाक्षंराज्यैकृष्ण
म्पिङ्गाक्षम् ॥ २१ ॥ अथैतान् ॥ अथैतानुष्टौविरूंपानालंभुतेतिं
दीर्घञ्चातिह्रस्वञ्चातिस्थलञ्चातिकृशञ्चातिशुक्लञ्चातिकृष्णञ्चाति

कुब्जश्चातिलोमशश्च ॥ अशूद्राऽअब्राह्मणास्तेप्प्राजापत्त्याः ॥ मा गधऽपुंश्चलीकितवःक्लीबोशूद्राऽअब्राह्मणास्तेप्प्राजापत्त्याः ॥ २२ ॥ [ १६ ] इति श्रीशुक्लयजुस्संहितापाठे त्रिंशत्तमोऽध्यायः ॥ ३० ॥

सहस्रशीर्षाषोडशाद्यःसंभूतःषड्द्वौद्वाविंशतिः॥ ॐसुहस्रंशीर्षापुरुषः । सहस्राक्षःसुहस्रंपात् ॥ सभूमिंᳬसुर्वतंस्पृत्वात्त्यतिष्ठद्दशाङ्गुलम् ॥१॥ पुरुषऽएव ॥ पुरुषऽएवेदंᳬसर्वंय्यद्भूतंय्यच्चभाव्यम् ॥ उतामृतत्त्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥ एतावानस्य । महिमातोज्ज्यायाँश्चपूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतन्दि

वि ॥ ३॥ त्रिपादूर्द्ध्वः ॥ त्रिपादूर्द्ध्वऽउदैत्त्पुरुषुःपादोस्येहाभवत्त्पुनः॥ ततोव्विष्ष्वुङ्व्यक्क्रामत्त्साशनानशुनेऽअुभि ॥४॥ ततोव्विराट् ॥ ततो व्विराडजायतव्विराजोऽअधिपूरुषः॥ सजातोऽअत्त्यरिच्च्यतपुश्चाद्भूमि मथोपुरः ॥ ५ ॥ तस्म्माद्युज्ञात् ॥ तस्म्माद्युज्ञात्त्सर्व्वहुतुःसम्भृतम्पृष दाुज्ज्यम् ॥ पुशूँस्ताँश्चक्क्रेव्वायुव्व्यानारुण्यागग्राम्म्याश्च्चुये ॥६॥ त स्म्माद्युज्ञात् ॥ तस्म्माद्युज्ञात्त्सर्व्वहुतऽऋचःसामानिजज्ञिरे ॥ छन्दां ᳯसिजज्ञिरेतस्म्माद्यजुस्त्तस्म्मादजायत ॥ ७ ॥ तस्म्मादश्श्वाः ॥ तस्म्मादश्श्वाऽअजायन्तुयेकेचोभुयादतः ॥ गावोहजज्ञिरेतस्म्मा

त्तस्म्मांज्जाताऽअंजावयं÷ ॥ ८ ॥ तंय्युज्ञम् ॥ तंय्युज्ञम्ब्बुर्हिषिप्प्रौक्ष
न्पुरुंषञ्जातमंग्ग्रुतः ॥ तेनंदेवाऽअंयजन्तसाद्ध्याऽऋषंयश्च्चुये ॥ ९ ॥
यत्पुरुंषम् ॥ यत्पुरुंषंव्यदंधुःकतिधाव्यंकल्प्पयन् ॥ मुखङ्किमं
स्स्यासीत्त्किम्ब्बाहूकिमूरूपादाऽउच्च्येते ॥ १० ॥ ब्राह्मणोस्य ॥ ब्रा
ह्मुणोस्स्युमुखंमासीद्बाहूराजुन्य÷कृतः ॥ ऊरूतदंस्युयद्वैश्यं÷पुद्भ्या
ᳪंशूद्रोऽअंजायत ॥ ११ ॥ चुन्द्रमामनंसः ॥ चुन्द्रमामनंसोजात
श्चक्षोःसूर्य्योऽअजायत ॥ श्रोत्राद्वायुश्च्चंप्प्राणश्च्चुमुखांदुग्निरंजाय
त ॥ १२ ॥ नाभ्यांऽआसीत् ॥ नाभ्यांऽआसीदुन्तरिंक्षᳪशीर्ष्णो



द्यौःसमंवर्त्तत ॥ पुद्भ्याम्भूमिर्द्दिशुःश्रोत्रात्तथांलोकाँ २ऽअंकल्पयन्
॥१३॥ यत्पुरुषेण । हुविषांदेवायुज्ञमतंन्वत ॥ वुसुन्तोस्स्यासीदा
ज्ज्यंग्ग्रीष्ममऽइध्मःशुरद्धविः ॥१४॥ सुप्तास्स्यांसन् ॥ सुप्तास्स्यांस
न्परिधयुस्त्रिःसुप्तसुमिधंःकृताः ॥ देवायद्युज्ञन्तंन्वानाऽअबंध्नन्पु
रुषम्पशुम॥१५॥युज्ञेनंयुज्ञम् ॥ युज्ञेनंयुज्ञमंयजन्तदेवास्तानिधर्म्माँ
णिप्प्रथमान्यांसन् ॥ तेहनाकंम्माहिमानंःसचन्तुयत्रुपूर्वेंसाद्ध्याःस
न्तिदेवाः ॥ १६ ॥ [ १६ ] अद्भ्यःसम्भृतः । पृथिव्यैरसांच्चविश्वकंर्म्म
णःसमंवर्त्ततान्ग्रे ॥ तस्स्यत्त्वष्टांविदधंद्रूपमेतितन्मर्त्यंस्स्यदेवुत्त्व



मुजानुमग्ग्रे ॥१७॥ वेदाहम् ॥ वेदाहमेतम्पुरुषम्महान्तमादित्त्यवं
र्णन्तमसःऽपुरस्तात् ॥ तमेवविदित्त्वातिमृत्त्युमेतिनान्न्यःपन्थाविद्यु
तेयनाय ॥१८॥ प्रजापतिश्चरति ॥ प्रजापतिश्चरतिगर्भेऽअन्तरजा
यमानोवहुधाविजायते ॥ तस्ययोनिम्परिपश्यन्तिधीरास्तस्मिन्हत
तस्त्थुर्भुवनानिविश्वा ॥१९॥ योदेवेभ्यः ॥ योदेवेभ्यऽआतपति
योदेवानाम्पुरोहितः ॥ पूर्वोयोदेवेभ्योजातोनमोरुचायब्राह्मये ॥
॥२०॥रुचम्ब्राह्मम्॥रुचम्ब्राह्मञ्जनयन्तोदेवाऽअग्ग्रेतदब्रुवन् ॥ य
स्त्वैवम्ब्राह्मणोविद्यात्तस्यदेवाऽअसन्वशे ॥ २१ ॥ श्रीश्च ॥ श्रीश्च

तेलक्ष्मीश्च्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्श्विनौव्यात्तम् ॥
इष्णन्निषाणामुम्मऽइषाणसर्वंलोकम्मऽइषाण ॥ २२ ॥ [ ६ ] ॥२॥
इति श्रीशुक्लयजुःसंहितायां एकत्रिंशोऽध्यायः ॥ ३१ ॥ तदेवसप्तवेन
स्तन्नवर्द्धोषोडश ॥ ॐतदेव ॥ तदेवाग्निस्तदादित्यस्तद्वायुस्तदुचन्द्र
माः ॥ तदेवशुक्रन्तद्ब्रह्मताऽआपःसप्प्रजापतिः ॥ १ ॥ सर्वेनिमे
षाः ॥ सर्वेनिमेषाजज्ञिरेविद्युतःपुरुषादधि ॥ नैनमूर्द्ध्वन्नतिर्य्यञ्चन्नम
द्ध्येपरिजग्ग्रभत् ॥ २ ॥ नतस्स्यं । प्प्रतिमाऽअस्तियस्यनामम
हद्यशः ॥ हिरण्यगर्भऽइत्येषमामाहिंसीदित्येषायस्मान्नजातऽइ

त्येप॑ः ॥ ३ ॥ एषोहं ॥ देवःप्रदिशोनुसर्व्वाःपूर्व्वोहजातःसऽउगर्भेऽ
अन्तः ॥ सऽएवजातःसजनिष्यमाणःप्रत्यङ्जनास्तिष्ठतिसर्व्वतोमुखः
॥ ४ ॥ यस्माज्जातम् ॥ यस्माज्जातन्नपुराकिञ्चनैवयऽआबभूवभु
वनानिविश्वा ॥ प्रजापतिःप्रजयासꣳरराणस्त्रीणिज्ज्योतीꣳषिसच
तेसषोडशी ॥ ५ ॥ येनद्यौः ॥ येनद्यौरुग्राप्पृथिवीचदृढायेनस्वस्त
भितंयेननाकः ॥ योऽअन्तरिक्षेरजसोविमानःकस्मैदेवायहविषावि
धेम ॥ ६ ॥ यङ्क्रन्दसी ॥ यङ्क्रन्दसीऽअवसातस्तभानेऽअभ्यैक्षेताम्म
नसारेजमाने ॥ यत्राधिसूरऽउदितोविभातिकस्मैदेवायहविषाविधे

म ॥ आपोंहुयद्बृंहतीर्व्विश्वुमायुन्गर्ब्भुन्दधांना ... 

म ॥ आपोंहुयद्बृंहतीर्व्विश्वदापः ॥७॥ [ ७ ] व्वेनस्तत् ॥ व्वेनस्त
त्पंश्यन्निहिंतुङ्गुहासद्यत्त्रुव्विश्वुम्भवुत्येकंनीडम् ॥ तस्मिन्निदर्ठ्सञ्च
व्विचैतिसर्वुर्ठ्सऽओतुःप्प्रोतंश्च्वव्विभूःप्प्रुजासुं ॥ ८ ॥ प्रतत् ॥ प्रतद्बो
चेदुमृतन्नुव्विद्वान्गंन्धुर्व्वोधामुव्विभृतंगुहासत् ॥ त्रीणिपुदानिनिहिंतागु
हांस्युयस्तानिव्वेदुसपितुःप्पितासंत् ॥९॥ सनः ॥ सनोबन्धुर्ज्जनिता
सव्विंधाताधामांनिव्वेदुभुवनानिव्विश्वां ॥ यत्रंदेवाऽअमृतंमानशानास्तृ
तीयेधामंन्नद्ध्यैरंयन्त ॥ १० ॥ पुरीत्यंभूतानि । पुरीत्यंलोकान्पुरी
त्युसर्व्वाःप्प्रुदिशोदिशंश्च ॥ उपुस्त्थायंप्प्रथमुजामृतस्स्यात्मना

अग्नेयक्षिस्स्वन्दंमम ॥ ३ ॥ युक्ष्वाहि । दैवहूतंमाँ३ऽअश्वाँ२ऽ
अग्नेरथीरिंव ॥ निहोतांपूर्व्यःसंदः ॥ ४ ॥ द्वेविरूपे । चरतः
स्वत्थैँऽअन्यान्यांवत्समुपधापयेते ॥ हरिरन्यस्याम्भवतिस्वधावा
ञ्छुक्रोऽअन्यस्यान्ददृशेसुवर्चाः ॥५॥ शतम् १७०० ॥ अयमिह ।
प्रथमोधायिधातृभिर्होतायजिष्ठोऽअध्वरेष्वीड्यः ॥ यमप्नवानोभृ
गवोविरुरुचुर्वनेषुचित्रंविभ्वंविशेविशे ॥ ६ ॥ त्रीणिशता । त्रीसह
स्राण्यग्निन्त्रिंशच्चदेवानवचासपर्य्यन् ॥ औक्षन्घृतैरस्तृणन्बर्हिर
स्मा ऽआदिद्धोतारन्न्यसादयन्त ॥७॥ मूर्द्धानंन्दिवः ॥ मूर्द्धानंन्दि

वोऽअंरतिम्पृंथिव्यावैश्वानुरमृतऽआजातमुग्निम् ॥ कुविᳬसुम्म्रा
जमतिंथिञ्जनांनामुासन्नापात्रंञ्जनयन्तदेवाः ॥ ८ ॥ अुग्निर्वृत्राणि ।
जङ्घनद्द्राविणस्युर्विपृन्ययां ॥ समिंद्धऽशुक्रऽआहुंतः ॥ ९ ॥ व्रिश्श्वेभिः
सोम्म्यम् ॥ व्रिश्श्वेभिऽसोम्म्यम्मद्धृग्ऽइन्द्रेणव्वायुनां ॥ पिबांमित्र
स्युधामंभिः ॥ १० ॥ आयत् ॥ आयदिषेनृपतिन्तेजऽआनुड्‌च्चिरे
तोनिषिक्तुन्द्यौरभीकें ॥ अुग्निᳬशर्द्धमनवुद्यंय्युवानᳬस्वाद्ध्यञ्जनय
त्सूदयंञ्च ॥ ११ ॥ अग्गेशर्द्ध । महतेसौभंगायुतवंद्युम्म्नान्युंत्तमा
निसन्तु ॥. सञ्जास्पुत्त्यᳬसुयमुमाकृणुष्ष्वशत्रूयुतामुभितिष्ठामहां

ळ्ंसि ॥ १२ ॥ त्त्वार्ठ्हि । मुन्द्रतंमयर्क्कशोकैर्व्वृमहेमहिनःश्रोष्ष्यं ग्ने ॥ इन्द्रन्नत्त्वाशवसादेवताव्वायुम्पृणन्तिराधसानृत्तमाः ॥ १३ ॥ त्त्वेऽअग्ग्ने । स्वाहुतप्प्रियासःसन्तुसूरयः ॥ य्युन्तारोयेमघवानोज नानामूर्व्वान्दयन्तुगोनाम् ॥ १४ ॥ श्रुधिश्श्रुत्त्कर्ण्ण ॥ श्रुधिश्श्रुत्त्क र्ण्णवह्निभिर्द्देवैरग्ग्नेसयावभिः ॥ आसीदन्तुबर्हिषिमित्त्रोऽअर्य्यमा प्प्रातर्य्यावाणोऽअद्ध्वरम् ॥ १५ ॥ व्विश्श्वेषामदितिः ॥ व्विश्श्वेषाम दितिर्य्यज्ञियानांव्विश्श्वेषामतिथिर्म्मानुषाणाम् ॥ अग्ग्निर्द्देवानामव ऽआवृणानःसुमृडीकोभवतुजातवेदाः ॥ १६ ॥ महोऽअग्ग्नेः । संसि

धानस्यशर्म्मण्यनांगामित्रेवरुणेस्वुस्तये ॥ श्रेष्ठंस्यामसवितुःसवीम
नितदेवानामवोऽअद्यावृंणीमहे ॥ १७ ॥ [ १७ ] आपश्चित् ॥ आ
पश्चित्पिप्युस्तर्य्योनगावोनक्षन्नृतञ्जरितारस्तऽइन्द्र ॥ याहिवायुर्न
नियुतोनोऽअच्छात्वर्ठहिधीभिर्दयंसेविवाजान् ॥१८॥ गावऽउप ॥
गावऽउपावतावतम्महीयज्ञस्यरप्सुदा ॥ उभाकर्णाहिरण्यया ॥
॥१९॥ यदद्य । सूरऽउदितेनांगामित्रोऽअर्य्यमा ॥ सुवातिसविता
भगः ॥ २० ॥ आसुतेसिञ्चतश्रियर्ठरोदस्योरभिश्रियम् ॥ रसा
दधीतवृषभम् ॥ तम्प्रत्क्नथायंवेनः ॥ २१ ॥ आतिष्ठन्तम्परि ॥ आ

तिष्ठन्तुम्परिविश्वेऽअभूषुञ्छ्रियोवसानश्चरतिस्वरोचिः ॥ मुहत्त
द्वृष्णोऽअसुरस्युनामाविश्वरूपोऽअमृतानितुस्थौ ॥ २२ ॥ प्र
वः ॥ प्रवोमुहेमन्दमानायान्धुसोर्चाविश्वानरायविश्वाभुवे ॥ इ
न्द्रस्युयस्युसुमखर्ठसहोमहिश्रवोनृम्णञ्चरोदसीसपुर्य्यतः ॥२३॥
बृहन्नित् ॥ बृहन्निदिध्मऽएषाम्भूरिशुस्तम्पृथुस्वरुः ॥ येषामि
न्द्रोयुवासखा ॥ २४ ॥ इन्द्रेहि ॥ इन्द्रेहिमत्स्यन्धसोविश्वे
भिःसोमपर्वभिः ॥ मुहाँऽअभिष्टिरोजसा ॥ २५ ॥ इन्द्रोवृत्रम् ॥
इन्द्रोवृत्रमवृणोच्छर्द्धनीतिःप्रमायिनाममिनाद्वर्पणीतिः ॥ अहुन्व्य

द्दसमुशधुग्ग्वनेष्ष्वाविद्धैनाऽअकृणोद्राम्म्याणाम् ॥ २६ ॥ कुतु
स्त्वम् ॥ कुतुस्त्वमिन्द्रमाहिनुःसन्नेकोयासिसत्पतेकिन्तंऽइत्थास
म्पृच्छसेसमराणःशुभानैर्व्वोचेस्तन्नोहरिवोयत्तेऽअस्मे ॥ मुहाँ२
ऽइन्द्रोयऽओजसाकदाचनस्तरीरसिकदाचनप्प्रयुच्छसि ॥२७॥ आ
तत्तऽइन्द्रायवःपनन्ताभियऽऊर्वङ्गोमन्तन्तितृत्सान् ॥ सुकृत्स्वंय्ये
पुरुपुत्राम्महीᳪसहस्रधाराम्बृहतीन्दुदुक्षन् ॥२८॥ इमान्ते ॥ इमा
न्तेधियम्प्रभरेमहोमहीमस्यस्तोत्रेधिषणायत्तऽआनजे ॥ तमुत्त्सवे
चप्प्रसवेचसासहिमिन्द्रन्देवासःशवसामदन्ननु ॥ २९ ॥ [ १२ ] व्रि

ऽआद्बृहत् ॥ विभ्राड्बृहत्पिबतु सोम्यम्मद्ध्वायुर्दधद्यज्ञपतावविह्रुत
म् ॥ वातंजूतो योऽअभिरक्षतित्त्मना प्रजाः पुंपोष पुरुधाविराजति ॥
॥ ३० ॥ उदुत्त्यम् ॥ उदुत्त्यञ्जातवेदसन्देवंवहन्ति केतवः ॥ दृशेवि
श्वायसूर्य्यम् ॥ ३१ ॥ येनापावक ॥ येनापावकचक्षसाभुरण्यन्तु
जनाँऽअनु ॥ त्वंवरुण पश्यसि ॥ ३२ ॥ दैव्यावद्ध्वर्य्यूऽआगतं रथे
न सूर्य्यत्त्वचा ॥ मद्ध्वायज्ञं समञ्जाथे ॥ तम्प्रत्त्नथायंवेनश्चित्रन्देवा
नाम् ॥ ३३ ॥ आनः ॥ आनऽइडाभिर्विदथे सुशस्तिविश्वानरः सवि
ता देवऽएतु ॥ अपि यथा युवानो मत्सथानो विश्वञ्जगदभिपित्त्वे मनी

षा ॥ ३४ ॥ यदद्य ॥ कच्चंवृत्रहन्नुदगाऽअभिसूर्य्य ॥ सर्वन्तदिन्द्रते
वशे ॥ ३५ ॥ तरणिर्व्विश्वदर्शतः ॥ तरणिर्व्विश्वदर्शतोज्ज्योतिष्कृद
सिसूर्य्य ॥ विश्वमाभासिरोचनम् ॥ ३६ ॥ तत्सूर्य्यस्य । देवत्वन्त
न्महित्वम्मद्ध्याकर्त्तोर्व्वितत्ँसञ्जभार ॥ यदेदयुक्तहरितःसधस्थ्था
दाद्रात्त्रीवासस्तनुतेसिमस्म्मै॥३७॥ तन्मित्रस्य ॥ तन्मित्रस्यवरुण
स्याभिचक्षेसूर्य्योरूपङ्कृणुतेद्योरुपस्थे ॥ अनन्तमन्न्यद्रुशदस्यपाजः
कृष्णमन्न्यद्धरितःसम्भरन्ति ॥३८॥ बण्महान् ॥ बण्महाँ२आसि
सूर्य्यबडादित्यमहाँ२ऽअसि ॥ महस्तेसतोमहिमापनस्यतेद्धादेव

मुहाँ२ऽअसि ॥ ३९ ॥ बट्सूर्य्यश्श्रवसामुहाँ२ऽअसिसुत्रादेवमुहाँ२ऽअसि ॥ मुह्नादेवानामसुर्य्यः पुरोहितोविभुज्ज्योतिरदाब्भ्यम् ॥४०॥ श्रायन्तऽइवुसूर्य्यम् ॥ श्रायन्तऽइवसूर्य्युंविश्श्वेदिन्द्रस्यभक्षत ॥ वसूनिजातेजनमानुऽओजसाप्प्रतिभागन्नदीधिम ॥ ४१ ॥ अद्यादेवाः॥ अद्यादेवाऽउदितासूर्य्यस्युनिरꣳहसःपिपृतानिरवद्यात् ॥ तन्नोमित्त्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीऽउतद्यौः ॥ ४२ ॥ आकृष्णेन ॥ आकृष्णेनुरजसावर्त्तमानोनिवेशयन्नमृतम्मर्त्त्यञ्च ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ ४३ ॥ [ १४ ] प्र

वांवृजे ॥ सुप्प्रयावुर्हिरेषामाविश्प्पतीववीरिटऽइयाते ॥ विशामुक्तो
रुषसःपूर्वहूतौवायुःपूषास्वस्तयेनियुत्त्वान् ॥ ४४ ॥ इन्द्रवायूबृहु
स्प्पतिम् ॥ इन्द्रवायूबृहस्प्पतिम्मित्राग्निम्पूषणम्भगम् ॥आदित्त्या
न्मारुतङ्गणम् ॥ ४५ ॥ वरुणऽप्प्राविता । भुवन्मित्रोविश्वाभिरू
तिभिः ॥ करतान्नऽसुराधसः ॥ ४६ ॥ अधिनः ॥ अधिनऽइन्द्रैषाँवि
ष्णोसजात्त्यानाम् ॥ इतामरुतोऽअश्विना ॥ तम्प्रत्नथायंवेनाये
देवासऽआनऽइडाभिर्विश्वैभिःसोम्म्यम्मद्धोमांसश्चर्षणीधृतः॥४७॥
अग्नऽइन्द्र । वरुणमित्रदेवाःशर्द्धःप्प्रयन्तमारुतोतविष्णो ॥ उभा

नासंत्त्यारुद्रोऽअधुग्ना॒ऽपूषाभगुःसरंस्वतीजुषन्त ॥ ४८ ॥ इन्द्राग्नी
मित्रावरुणा । दितिꣳस्वःपृथिवीन्द्याम्मुरुतुःपर्व्वताँ२ऽअुपः ॥ हुवे
विष्णुम्पूषणुम्ब्रह्मणुस्प्पातिम्भगन्नुशꣳसꣳसवितारमूतये ॥ ४९ ॥
अुस्मेरुद्राः ॥अुस्मेरुद्रामेहनापर्वतासोवृत्रहत्त्येभरंहूतौसुजोषाः ॥
यःशꣳसंतेस्तुवतेधायिपुज्ज्रऽइन्द्रंज्ज्येष्ठाऽअुस्माँ२ऽअंवन्तुदेवाः ॥
॥ ५० ॥ अुर्वाञ्चोऽअुद्य ॥ अुर्वाञ्चोऽअुद्याभंवतायजत्राऽआवो
हार्दिभयंमानोव्ययेयम् ॥ त्राद्ध्वंन्नोदेवानिजुरोवृकंस्यत्राद्ध्वङ्कर्तादवुप
दांयजत्राः ॥ ५१ ॥ विश्वेऽअुद्य । मुरुतोविश्वंऽऊतीविश्वेभवन्त्व

ग्म्नयुꣳसमिद्धाः ॥ व्विश्श्वेनोदेवाऽअवुसागमन्तुव्विश्श्वमस्तुद्रविणं
व्वाजोऽअस्म्मे ॥ ५२ ॥ व्विश्श्वेदेवाः । शृणुतेमꣳहवम्मेयेऽअन्तरि
क्षेयऽउपुद्यविष्ठ ॥ येऽअग्निजिह्वाऽउतवायजत्राऽआसद्यास्म्मिन्न्वर्हि
षिमादयद्ध्वम् ॥ ५३ ॥ देवेब्भ्योहि । प्प्रथमंय्यज्ञियेब्भ्योमृतत्त्व
ꣳसुवसिभागमुत्तमम् ॥ आदिद्दामानꣳसवितुर्व्व्यूर्णुषेनूचीनाजीवि
तामानुषेब्भ्यः ॥ ५४ ॥ [ ११ ] प्रवायुम् ॥ प्रवायमच्छाबृहतीम
नीपावृहद्रयिंव्विश्श्ववारꣳरथप्प्राम् ॥ द्युतद्यामानियुतःपत्त्यमानङ्कु
विङ्कविमियक्षसिप्प्रयज्ज्यो ॥ ५५ ॥ इन्द्रवायूऽइमे । सुताऽउप

प्प्रयोभिरागतम् ॥ इन्द्रंवोवामुशन्तिहि ॥ ५६ ॥ मित्रंहुवे । पू
तदक्षंवरुणञ्चरिशादसम् ॥ धियंघृताचीᳬंसाधन्ता ॥ ५७ ॥ दस्रा
युवाकवः सुतानासत्त्यावृक्तबर्हिषः ॥ आयातᳬंरुद्रवर्त्तनी ॥ त
म्प्रत्नथायंवेनः ॥ ५८ ॥ विदद्यदीं ॥ विदद्यदीसरमारुग्णमद्रेर्म्म
हिपाथः पूर्व्यᳬंसध्र्यक्कः ॥ अग्रंनयत्सुपद्यक्षराणामच्छारवम्प्रथमा
जानतीगात् ॥ ५९ ॥ नहिस्पशम् ॥ नहिस्पशमविदन्नन्यमस्मा
द्वैश्वानरात्पुरएतारमग्नेः ॥ एमेनमवृधन्नमृताअमर्त्त्यंवैश्वानर
ङ्क्षैत्रजित्त्यायदेवाः ॥ ६० ॥ उग्राविघनिनां ॥ उग्राविघनिनामृधः

इन्द्राग्नीहवामहे ॥ तानोमृडातऽईदृशे ॥ ६१ ॥ उपास्मैगायतान

रुःपवमानायेन्दवे ॥ अभिदेवाऽइयक्षते ॥ ६२ ॥ येत्त्वां । हिह

त्त्येमघवन्नवर्द्धन्ये शाम्बुरेहरिवोयेगविष्टौ ॥ येत्त्वानूनमनुमदन्तिवि

प्प्राःपिबेन्द्रसोमसगणोमरुद्भिः ॥ ६३ ॥ जनिष्ठाऽउग्रः । सहसेतु

रायमन्द्रऽओजिष्ठोवहुलाभिमानः ॥ अवर्द्धन्निन्द्रम्मरुतश्चिदत्रमा

तायद्वीरन्दधनद्धनिष्ठा ॥ ६४ ॥ आतू ॥ आतूनऽइन्द्रवृत्रहन्नस्माक

मर्द्धमागहि ॥ महान्महीभिरूतिभिः ॥ ६५ ॥ त्वामिन्द्र ॥ त्वामिन्द्र

प्प्रतूर्तिष्वभिविश्वाऽअसिस्पृधः ॥ अशस्तिहाजनिताविश्वतूर

सि॒त्वन्तूं॑र्व॒तरु॒ग्ण्युतः॑ ॥ ६६ ॥ अनुंते ॥ अनुं॑ते॒शुष्म॑न्तु॒रय॑न्तमी
य॒तुं॒क्षो॒णीशिशुं॒नमा॒तरा॑ ॥ विश्वा॑स्ते॒स्पृध॑ःश्नथयन्तम॒न्यवे॑वृ॒त्रं
यदि॑न्द्र॒तूर्व॑सि ॥ ६७ ॥ य॒ज्ञोदे॒वाना॑म् ॥ य॒ज्ञोदे॒वाना॒म्प्रत्ये॑तिसु॒
म्नमादि॑त्यासो॒भव॑तामृ॒डय॑न्तः ॥ आवो॒र्वाचीसु॑म॒तिर्व॑वृत्याद॒ꣳहो
श्चि॒द्याव॑रिवो॒वित्त॒रास॑त् ॥ ६८ ॥ अद॑ब्धेभिःसवितः । पा॒युभि॒ष्ट्व
ꣳशि॒वेभि॑र॒द्यपरि॑पाहि॒नोगय॑म् ॥ हिर॑ण्यजिह्वः सुवि॒ताय॒नव्य॑से॒रक्षा॒
माकि॑र्नो॒ऽअ॒घशꣳस॒ऽईशत ॥ ६९ ॥ [ १५ ] प्रवी॒रया । शुच॑यो॒दाद्रि॑रे
वाम॒ध्व॒र्युभि॒र्मधु॑मन्तः सु॒तास॑ः ॥ वह॑वायो नि॒युतो॑या॒ह्यच्छा॒पिबा॑

सुतस्यान्धंसोमदाय ॥ ७० ॥ गावुऽउपं । गावुऽउपावतावुतम्मुही
युज्ञस्यंरुप्सुदां ॥ उुभाकर्णांहिरुण्ययां ॥७१॥ काव्ययोराजानेषु ॥
काव्ययोराजानेषुक्रत्वादक्षंस्यदुरोणे ॥ रिशादंसासुधस्त्थुऽआ ॥
॥७२॥ दैव्यांवद्ध्वर्यूं ॥ दैव्यांवद्ध्वर्यूऽआगंतुᳬरथेनुसूर्य्यंत्त्वचा ॥ म
द्ध्वांयुज्ञᳬसमंञ्ञाथे ॥ तम्प्रत्क्कथायंव्वेनः ॥ ७३ ॥ तिरुश्चीनोवित
तः ॥ तिरुश्चीनोवितंतोरुश्मिरेषामुधᳬस्विदासी ३ दुपरिस्विदासी
३ त् ॥ रेतोधाऽआंसन्महिमानंऽआसन्त्स्वुधाऽअुवस्त्तात्प्रयंतिᳬपु
रस्त्तांत् ॥ ७४ ॥ आरोदंसीऽअपृणदास्वंम्मुहज्जातंय्यदेनमुपसोऽ

अधारयन् ॥ सोऽअङ्कुरायपरिणीयतेकविरत्योनवाजंसातयेचनोहितः ॥ ७५ ॥ उक्थेभिर्वृत्रहन्तमा ॥ उक्थेभिर्वृत्रहन्तमायामन्दानाचिदागिरा ॥ आङ्गूषैराविवासतः ॥ ७६ ॥ उपनः ॥ सूनवोगिरःशृण्वन्त्वमृतस्ययये ॥ सुमृडीकाभवन्तुनः ॥ ७७ ॥ ब्रह्माणिमे । मतयःशंसुतासःशुष्मइयर्तिप्रभृतोमेअद्रिः ॥ आशासतेप्रतिहर्यन्त्युक्थेमाहरीवहतस्तानोअच्छ ॥ ७८ ॥ अनुत्तमाते । मघवन्नकिर्नुनत्वावाँऽअस्तिदेवताविदानः ॥ नजायमानोनशतेनजातोयानिकरिष्याकृणुहिप्रवृद्ध ॥ ७९ ॥ तादित् ॥ तदिदासभुवनेषुज्ज्ये

पृष्ठ्यतोयज्ञऽउग्रस्त्वेषनृम्णः ॥ सद्योजज्ञानोनिरिणातिशत्रूननुयं
विश्वेमदन्त्यूमाः ॥ ८० ॥ इमाऽउत्त्वा । पुरूवसोगिरोवर्द्धन्तुया
मम ॥ पावकवर्णाःशुचयोविपश्चितोभिस्तोमैरनूषत ॥ ८१ ॥ यस्या
यम् ॥ यस्यायंविश्वऽआर्य्योदासःशेवधिपाऽअरिः ॥ तिरश्चिद
र्य्येरुशमेपवीरवितुभ्येत्सोऽअज्ज्यतेरयिः ॥ ८२ ॥ अयꣳसहस्र
म् ॥ अयꣳसहस्रमृषिभिःसहस्कृतःसमुद्रऽइवपप्रथे ॥ सत्त्यःसोऽ
अस्यमहिमागृणेशवोयज्ञेषुविप्रराज्ज्ये ॥ ८३ ॥ अदब्धेभिःसवि
तः । पायुभिष्ट्वꣳशिवेभिरद्यपरिपाहिनोगयम् ॥ हिरण्यजिह्वःसुवि

तायुनद्व्यंसुरक्षुमाकिन्नोंऽअुघर्शंᳪसऽईशत ॥८४॥ [ १५ ॥ आनं÷ ॥
आनोंयुज्ञन्दिविस्पृशुंवायोंयाहिसुमन्मंभिः ॥ अुन्तःपुवित्रंऽअुपरिं
श्रीणानोयᳪशुक्रोंऽअंयामिते ॥ ८५ ॥ इन्द्रवायूसुंसुन्दृशां । सुह
वेहहंवामहे ॥ यथांनुःसर्वुऽइज्जनोंनमीवःसुङ्गमेंसुमनाऽअसंत् ॥८६॥
ऋधंगित्था । समर्त्यंः शशुमेदुेवतांतये ॥ योनूनम्मित्रावरुंणावुभि
ष्टंयऽआचुक्रेहुव्यदांतये ॥ ८७ ॥ आयांतम् ॥ आयांतुमुपंभूषतुम्म
ध्वं÷पिवतमाश्विना ॥ दुग्धम्पयोंवृषणाजेन्यावसूमानोंमर्ढिष्टमाग
तम् ॥ ८८ ॥ प्रैतुं ॥ प्रैतुब्रह्मंणुस्पतिःप्प्रदेव्येतुसूनृतां ॥ अच्छांवी

रत्नऽर्यम्पुङ्क्तिराधसन्देवायुज्ञन्नयन्तुनः ॥ ८९ ॥ चुन्द्रमाऽअुप्प्सु ॥
चुन्द्रमाऽअुप्स्वुन्तरासुपुर्णोधावतेदिवि ॥ रुयिम्पिशङ्गम्बहुलम्पुरु
स्पृहर्ठहरिरेतिकनिक्रदत् ॥ ९० ॥ देवन्देवुंव्वः ॥ देवन्देवंव्वोवसेदेव
न्देवमुभिष्टये ॥ देवन्देवर्ठहुवेमुव्वाजसातयेगृणन्तोदेव्याधिया ॥९१॥
दिविपृष्टः ॥ दिविपृष्टोऽअरोचताग्निवैश्वानरोबृहन् ॥ क्ष्मयांवृ
धानऽओजसाचनोहितोज्ज्योतिषाबाधतेतमः ॥ ९२ ॥ इन्द्राग्नीऽ
अपात् ॥ इन्द्राग्नीऽअपादियम्पूर्व्वागात्पुद्धतीभ्यः ॥ हित्वीशिरोजि
ह्वयाबावदच्चरत्त्रिर्ठशत्पदान्न्यक्रमीत् ॥९३॥ देवासोहिष्मा । मनवेस

मंन्यवोविश्वैसाकॅसरांतयः॥ तेनोऽअद्यतेऽअंपुरन्तुचेतुनोभवन्तुव
रिवोविदः॥ ९४ ॥ अपांधमत् ॥ अपांधमदभिशस्तीरशस्तिहाथे
न्द्रोद्युम्न्यभंवत् ॥ देवास्तऽइन्द्रसुख्यायंयेमिरेबृहंद्भानोमरुंद्गण
॥ ९५ ॥ प्रवः ॥ प्रवऽइन्द्रायबृहतेमरुंतोब्रह्मांर्चत ॥ वृत्रहंनतिवृ
त्रहाशतक्रंतुर्वज्रेणशतपंर्वणा ॥ ९६ ॥ अस्येदिन्द्रोवावृधेवृष्ण्युꣳ
शवोमदेंसुतस्यविष्णवि ॥ अद्यातमंस्यमहिमानंमायवोनुष्टुवन्तिपू
र्वथां ॥ इमाऽउत्त्वायस्यायमुयꣳसहस्रमूर्द्धऽउपुणः ॥९७॥ [ १३ ]
इति श्रीशुक्लयजुःसंहितापाठे त्रयस्त्रिंशोऽध्यायः ॥३३॥ यज्जाग्रतःप

श्चनद्यःसोमोधेनुमाकृष्णेनपूषंतवदशकान्तदष्टौषडष्टापञ्चाशत् ॥
ॐयज्जाग्रंतऽ॥यज्जाग्रंतोदूरमूदैतिदैवन्तदुसुप्तस्यतथैवेति ॥ दूरङ्ग
मञ्ज्योतिषाञ्ज्योतिरेकन्तन्मेमनः शिवसङ्कल्पमस्तु ॥१॥ येनकर्म्मा
णि ॥ येनकर्म्माण्यपसोमनीषिणोयज्ञेकृण्वन्तिविदथेषुधीराऽ ॥ य
दपूर्व्वंयक्षमन्तःप्रजानान्तन्मेमनः शिवसङ्कल्पमस्तु ॥ २ ॥ यत्प्र
ज्ञानम् ॥ यत्प्रज्ञानमुतचेतोधृतिश्चयज्ज्योतिरन्तरमृतम्प्रजासु ॥
यस्मान्नऽऋतेकिञ्चनकर्म्माक्रियतेतन्मेमनः शिवसङ्कल्पमस्तु ॥३॥
येनेदम् ॥ येनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेनसर्व्वम् ॥ ये

नंयुज्ञस्त्तायतेसुप्तहोतातन्मेमनः शिवसंङ्कल्पमस्तु ॥४॥ यस्मिन्नृचः॥यस्स्मिन्नृचुत्साम्यजूंषियस्मिन्प्रतिष्ठितारथनाभाविवाराः। यस्मिंश्चित्तंसर्वुमोतम्प्रजानान्तन्मेमनः शिवसंङ्कल्पमस्तु ॥ ५ ॥ सुषारथिरश्वानिव ॥ सुषारथिरश्वानिवयन्मनुष्ष्यान्नेनीयतेभीशुभिर्वाजिनऽइव ॥ हृत्प्रतिष्ठंय्यदजिरञ्जविष्ठुन्तन्मेमनः शिवसंङ्कल्पमस्तु ॥ ६ ॥ पितुन्नु। स्तोषम्मुहोधम्माणन्तविषीम् ॥ यस्यत्रितोव्योजसावृत्रंविपर्वमुर्दयत् ॥ ७ ॥ अन्विदनु ॥ अन्विदनुमतेत्त्वंमन्न्यासैशन्नंनस्कृधि ॥ क्रत्वेदक्षायनोहिनुप्रणऽआयूंषितारिषः ॥ ८ ॥

शतम् ॥१८००॥ अनुंनः ॥ अनुंनोद्यानुंमतिर्य्युज्ञन्देवेषुमन्यताम् ॥
अग्निश्चंहव्युवाहंनोभवंतन्दाशुषेमयंः ॥९॥ सिनींवालिपृथुंष्टुके ॥
सिनींवालिपृथुंष्टुकेयादेवानामसिस्वसां ॥ जुषस्वंहुव्यमाहुतम्प्रजा
न्दैंविदिदिड्ढिनः ॥१०॥ [१०] पञ्चंनुद्यः ॥ पञ्चंनुद्यःसरंस्वतीमपिय
न्तिसस्रोंतसः ॥ सरंस्वतीतुपंञ्चुधासोदेशेभंवत्सुरित् ॥ ११ ॥ त्वमं
ग्ने ॥ प्रथमोऽअङ्गिराऽऋषिर्द्देवोदेवानांमभवः शिवःसखां ॥ तवंव्रतेक
वयोंविद्मनापुसोजांयन्तमुरुताेभ्राजंदृष्टयः ॥१२॥ त्वन्नंः ॥ त्वन्नों
ऽअग्नेतवंदेवपायुभिर्म्मुघोनोंरक्षतुन्वुश्चवन्द्य ॥ त्रातातोकस्युतनं

युगवांमुस्यनिमेषुऽऽरक्षमाणुस्तवंव्रुते ॥ १३ ॥ उत्तानायामवं । भरा
चिकित्वान्त्सुद्यःप्रवीतावृषणअजान ॥ अरुषस्तूपोरुशदस्युपाज
ऽइडायास्पुत्रोवयुनेजनिष्ट ॥ १४ ॥ इडायास्त्वा । पुदेवयन्ना
भापृथिव्याऽअधि ॥ जातवेदोनिधीमुह्यग्नेहुव्यायुवोढवे ॥ १५ ॥
प्रमंन्महे । शवसानायंशूषमाङ्गूषङ्गिर्वणसेऽअङ्गिरुस्वत् ॥ सुवृक्ति
भिस्तुवुतऽऋग्मियायार्चामार्कन्नरेविश्श्रुताय ॥ १६ ॥ प्रवं ॥ प्रवो
मुहेमहिनमोभरध्वमाङ्गूष्यंशवसानायसामं ॥ येनानुःपूर्वेपितरः
पदुज्ञाऽअर्चन्तोऽअङ्गिरसोगाऽअविन्दन् ॥ १७ ॥ इच्छन्तित्वासो

म्म्यासुःसखायःसुन्वन्तिसोमुन्दधतिप्प्रयांᳫंसि ॥ तितिक्षन्तेऽअ
भिशस्तिञ्जनानामिन्द्रत्त्वदाकश्चुनहिप्प्रकेतः ॥ १८ ॥ नते । दूरेप
रमाचिद्रजाᳫंस्यातुप्प्रयाहिहरिवोहरिब्भ्याम् ॥ स्त्थिरायवृष्णुस
वनाकृतेमायुक्ताग्ग्रावाणःसमिधानेऽअग्ग्नौ ॥ १९ ॥ अषाढंय्युत्सु ।
पृतनासुपप्प्रिᳫंस्वर्षामप्प्सांवृजनस्यगोपाम् ॥ भरेषुजाᳫंसुक्षिति
ᳫंसुश्श्रवसञ्जयन्तन्त्वामनुमदेमसोम ॥२०॥ [ १० ] सोमोधेनुम्॥
सोमोधेनुᳫंसोमोऽअर्वन्तमाशुᳫंसोमोवीरङ्कर्म्मण्ण्यन्ददाति ॥ साद
न्न्यंविदत्थ्यᳫंसभेयम्पितृश्श्रवणंय्योददाशदस्म्मै ॥ २१ ॥ त्वामि

माः ॥ त्वमिमाऽओषधीःसोमविश्वास्त्वमपोऽअंजनयस्त्वङ्गाः ॥
त्वमाततन्थोर्वन्तरिक्षन्त्वञ्ज्योतिषाविर्तमोववर्त्थ ॥२२॥ देवेनंनः ॥
देवेनंनोमनसादेवसोमरायोभागऽसहसावन्नभियुद्ध्य ॥ मात्त्वात
नदीशिषेवीर्य्यस्योभयेभ्यःप्रचिकित्सागविष्टौ ॥ २३ ॥ अष्टौवि॥
अष्टौव्यख्यत्ककुभःपृथिव्यास्त्रीधन्वयोजनासप्तसिन्धून् ॥ हिर
ण्याक्षःसवितादेवऽआगाद्दधद्रत्त्कादाशुषेवार्य्याणि ॥ २४ ॥ हिरंण्य
पाणिःसविता । विचर्षणिरुभेद्यावापृथिवीऽअन्तरीयते ॥ अपामी
वाम्बाधतेवेतिसूर्य्यमभिकृष्णेनरजसाद्यामृणोति ॥ २५ ॥ हिरंण्य

हस्तोऽअसुरः । सुनीथःसुमृडीकःस्ववाँयात्वर्वाङ् ॥ अपसेधन्रक्ष
सोयातुधानानस्थाद्देवःप्रतिदोषङ्गृणानः ॥ २६ ॥ येते ॥ येतेपन्थाः
सवितःपूर्व्यासोऽरेणवःसुकृताऽअन्तरिक्षे ॥ तेभिर्नोऽअद्यपथिभिःसु
गेभीरक्षाचनोऽअधिचब्रूहिदेव ॥२७॥ उभापिबतम् ॥ उभापिबतम
श्विनोभानःशर्मयच्छतम् ॥ अविद्रियाभिरूतिभिः ॥ २८ ॥ अप्न
स्वतीमश्विनावाचमस्मेकृतन्नोदस्रावृषणामनीषाम् ॥ अद्यूत्येवं
सेनिह्वयेवांवृधेचनोभवतंवाजसातौ ॥ २९ ॥ द्युभिरक्तुभिः ॥ द्युभिर
क्तुभिःपरिपातमस्मानरिष्टेभिरश्विनासौभगेभिः ॥ तन्नोमित्रोवरु

णोमामहन्तामदितिꣳसिन्धुः पृथिवीऽउतद्यौः ॥३०॥ [१०]॥ आकृ
ष्णेन । रजसावर्त्तमानोनिवेशयन्नमृतम्मर्त्त्यञ्च ॥ हिरण्ययेनसवि
तारथेनादेवोयातिभुवनानिपश्यन् ॥ ३१ ॥ आरात्रि । पार्थिवꣳरजः
पितुरप्रायिधामभिः ॥ दिवꣳसदाꣳसिबृहतीवितिष्ठसऽआत्वेषंवर्त्त
तेतमः ॥ ३२ ॥ उषस्तत् ॥ उषस्तच्चित्रमाभरास्मभ्यंवाजिनीव
ति ॥ येनतोकञ्चतनयञ्चधामहे॥३३॥ प्रातरग्निम् ॥ प्रातरग्निम्प्रा
तरिन्द्रꣳहवामहेप्रातर्म्मित्रावरुणाप्रातरश्विना ॥ प्रातर्भगम्पूषण
म्ब्रह्मणस्पतिम्प्रातꣳसोममुतरुद्रꣳहुवेम ॥३४ प्रातर्जितम्भगम् ॥ प्रा

तर्जितम्भगंमुग्रꣳहुवेमव्वयम्पुत्रमदितेर्य्योविधुर्त्ता ॥ आध्रश्चिद्यम्म
न्यमानस्तुरश्चिद्राजाचिद्यम्भगम्भक्षीत्याह ॥ ३५ ॥ भगप्प्रणेतः ॥
भगप्प्रणेतुर्भगसत्यराधोभगेमान्धियमुदवादद्न्नः ॥ भगप्प्रनोजन
यगोभिरश्वैर्भगप्प्रनृभिर्न्नृवन्तःस्याम ॥ ३६ ॥ उतेदानीम् ॥ उ
तेदानीम्भगवन्तःस्यामोतप्प्रपित्वऽउतमद्ध्येऽअह्नाम् ॥ उतोदिता
मघवन्त्सूर्य्यस्यव्वयन्देवानाꣳसुमतौस्याम ॥ ३७ ॥ भगऽएवभग
वाꣳ ॥ ऽअस्तुदेवास्तेनव्वयम्भगवन्तःस्याम ॥ तन्त्वाभगसर्व्वऽइज्जो
हवीतिसनोभगपुरऽएताभवेह॥३८॥समद्ध्वराय ॥ समद्ध्वरायोषसोन

मन्तदधिक्रावैवुशुचंयेपुदायं ॥ अर्वाचीनंवंसुविदम्भगंन्नोरथंमिवा
श्वांवाजिनुऽआवंहन्तु ॥ ३९ ॥ अश्वावतीग्गोमंतीः ॥ अश्वांवती
ग्गोमंतीर्न्नंऽउषासोंवीरवंतीःसदंमुच्छन्तुभुद्राः ॥ घृतन्दुहांनाविश्व
तुःप्रपीतायूयंपांतस्वुस्तिभिःसदांनः ॥४०॥ [१०] ॥ पूषुन्तव । व्र
तेवुयन्नरिष्येमुकदांचुन ॥ स्तोतारंस्तऽइहस्मंसि ॥ ४१ ॥ पुथ
स्पंथुःपरिपतिम् ॥ पुथस्पंथुःपरिपतिंवचुस्याकामेनकृतोऽअभ्या
नडुर्कम् ॥ सनोरासच्छुरुधंश्चन्द्राग्ग्राधियंन्धियंसीषधातिप्प्रपूषा
॥ ४२ ॥ त्रीणिपुदाविचंक्रमेविष्णुर्ग्गोपाऽअदांभ्यः ॥ अतोधर्म्मा

णिधारयंन् ॥४३॥ तद्विप्प्रांसऽ ॥ तद्विप्प्रांसोविपन्यवोजागृवाꣳसः
समिन्धते ॥ विष्णोर्य्यत्परमम्पदम् ॥ ४४ ॥ घृतवतीभुवनाना
म् ॥ घृतवतीभुवनानामभिश्रियोर्वीपृत्थ्वीमधुदुघेसुपेशसा ॥ द्यावा
पृथिवीवरुणस्युधर्मणाविष्कभितेऽअजरेभूरिरेतसा ॥ ४५ ॥ येनःसु
पत्काऽअपतेभवन्त्विन्द्राग्निभ्यामवबाधामहेतान् ॥ वसवोरुद्राऽ
आदित्त्याऽउपरिस्पृशम्मोग्ग्रश्चेत्तारमधिराजमक्रन् ॥ ४६ ॥ आनां
सत्त्या ॥ त्रिभिरेकादशैरिहदेवेभिर्य्यातम्मधुपेयमश्विनां ॥ प्रायु
स्तारिष्टन्नीरपाꣳसिमृक्षतꣳसेधतन्द्वेषोभवतꣳसचाभुवां ॥ ४७ ॥ ए

पर्वः ॥ एषवस्तोमोमरुतऽइयङ्गीर्म्मान्दार्य्यस्यमान्यस्यकारोः ॥
एषायासीष्टतन्वेवयांविद्यामेषंवृजनंजीरदानुम् ॥४८॥ सहस्तोमाः
सहच्छन्दसः ॥ सहस्तोमाःसहच्छन्दसऽआवृतःसहप्रमाऽऋष
यःसप्तदैव्याः ॥ पूर्वेषाम्पन्थामनुदृश्यधीराऽअन्वालेभिरेरथ्योनर
श्मीन् ॥४९॥ आयुष्यंवर्च्चस्यम् ॥ आयुष्यंवर्च्चस्यꣳरायस्पोष
मौद्भिदम् ॥ इदꣳहिरण्यंवर्च्चस्वज्जैत्रायाविशतादुमाम्॥५०॥नतत्॥न
तद्रक्षाꣳसिनपिशाचास्तरन्तिदेवानामोजःप्रथमजꣳह्येतत।योबि
भर्तिदाक्षायणꣳहिरण्यꣳसदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुते

दीर्ग्घमायुः॥५१॥यदाबध्नन् ॥ यदाबध्नन्दाक्षायणाहिरण्यᳪशुता
नीकायसुमनस्यमानाः ॥ तन्मऽआबध्नामिशतशारदायायुष्मा
ञ्जरदष्टिर्य्यथासम् ॥ ५२ ॥ उतनः ॥ उतनोहिर्बुध्न्यः शृणो
त्वजऽएकपात्पृथिवीसमुद्रः ॥ विश्वेदेवाऽऋतावृधोहुवानास्तुताम
न्त्राः कविशस्ताऽअवन्तु ॥ ५३ ॥ इमागिरः ॥ इमागिरऽआदित्ये
भ्योघृतस्नूः सनाद्राजभ्योजुह्वाजुहोमि॥शृणोतुमित्रोऽअर्य्यमाभगो
नस्तुविजातोवरुणोदक्षोऽअᳪशः ॥ ५४ ॥ सप्तऽऋषयः ॥ सप्तऽऋ
षयः प्रतिहिताः शरीरेसप्तरक्षन्तिसदमप्प्रमादम् ॥ सप्तापः स्वपतो

लोकमायुस्तत्रजागृतोऽअस्वप्नजौसत्रसदौचदेवौ ॥ ५५ ॥ उत्तिष्ठ
ब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्रयन्तुमरुतःसुदानवऽइन्द्र
प्राशूर्भवासचा ॥ ५६ ॥ प्रनूनम् ॥ प्रनूनम्ब्रह्मणस्पतिर्म्मन्त्रंव
दत्युक्थ्यम् ॥ यस्मिन्निन्द्रोवरुणोमित्रोऽअर्य्यमादेवाऽओकांसि
चक्रिरे ॥ ५७ ॥ ब्रह्मणस्पते ॥ ब्रह्मणस्पतेत्वमस्ययन्तासूक्त
स्यबोधितनयञ्चजिन्व ॥ विश्वन्तद्भद्रंयदवन्तिदेवाबृहद्वदेमविद
थेसुवीराः ॥ यऽइमाविश्वाविश्वकर्म्मायोनःपितान्नपतेन्नस्यनो
देहि ॥ ५८ ॥ [ १८ ] इति श्रीशुक्लयजुःसंहितापाठे चतुस्त्रिंशोऽ

ध्यायः ॥३४॥ अपेतोदशापाचंद्वादशद्वौद्वाविंꣳशतिः ॥ ॐअपेतꣳ ॥
अपेतोयन्तुपणयोसुंम्नादेवपीयवंः ॥ अस्यलोकःसुतावंतꣳ ॥ द्युभि
रहोभिरक्तुभिर्व्यक्तंय्यमोदंदात्त्ववसानंमस्म्मै ॥१॥ सविताते ॥ स
वितातेशरींरेब्भ्यꣳपृथिव्यांल्लोकमिच्छतु ॥ तस्म्मैयुज्ज्यन्तामुस्त्रि
यांः ॥ २ ॥ व्वायुःपुंनातु । सवितापुंनात्त्वग्ग्नेर्भ्राजंसासूर्य्यंस्यवर्च्चं
सा ॥ विमुंच्यन्तामुस्त्रियांः ॥ ३ ॥ अश्श्वत्त्थेवंः ॥ अश्श्वत्त्थेवोनिष
दंनम्पर्णेवोंव्वसतिष्कृता ॥ गोभाजऽइत्त्किलासथयत्त्सनवंथपूरुष
म् ॥४॥ सविताते । शरींराणिमातुरुपस्त्थऽआवंपतु ॥ तस्म्मैपृथि

विशम्भंव ॥ ५ ॥ प्रजापंतौत्त्वा । देवतांयामुपोदकेल्लोकेनिदंधाम्म्य
सौ ॥ अपंनुऽशोशुंचदुघम् ॥ ६ ॥ परंम्मृत्त्यो ॥ परंम्मृत्त्योऽअनुपरे
हिपन्थांठ्यस्तेंऽअन्न्यऽइतंरोदेवयानांत् ॥ चक्षुष्मतेश्शृण्वतेतेंब्रवीमि
मानंःप्रजाठंरीरिषोमोतव्वीरान् ॥ ७ ॥ शंव्वातुः । शठंहितेघृणिःश
न्तेंभवन्त्विष्टंकाः ॥ शन्तेंभवन्त्वग्नयऽपार्थिवासोमात्त्वाभिशूंशुच
न् ॥ ८ ॥ कल्पन्तान्ते । दिशुस्तुभ्म्यमापंःशिवतंमास्तुभ्म्यंभव
न्तुसिन्धंवः ॥ अन्तारिक्षठंशिवन्तुभ्म्यंकल्पन्तान्तेदिशःसर्वाः ॥९॥
अश्म्मंन्वतीरीयतेसठंरंभध्वमुत्तिष्ठतप्रतंरतासखायः ॥ अत्रांजहीमो

शिवायेऽअसंच्छिवात्त्वयमुत्तंरमाभिवाजांन् ॥ १० ॥ [ १० ] अपाघ
म् ॥ अपाघमपुकिल्बिषुमपंकृत्त्यामपोरपं÷ ॥ अपांमार्ग्गुत्त्वमुस्म्म
दपंदुःष्व्वप्न्यंᳲसुव ॥११॥ सुमित्त्रियानं÷ ॥ सुमित्त्रियानुऽआपुऽओ
षंधयऽसन्तुदुर्म्मित्त्रियास्त्तस्म्मैसन्तुयोस्म्मान्द्वेष्टियञ्चंव्वयन्द्विष्म्मः॥
॥ १२ ॥ अनुड्वहंमन्न्वारंभामहेसौरंभेयᳲस्वुस्त्तयें ॥ सनुऽइन्द्रंऽइ
वदेवेब्भ्योवह्निः सुन्तारंणोभव ॥ १३ ॥ उद्वुयम् ॥ उद्वुयन्तमंसुस्प
रिस्वुःपश्यन्तुऽउत्तंरम् ॥ देवन्देंवत्रासूर्य्यंमगंन्मुज्ज्योतिरुत्तमम् ॥
॥ १४ ॥ इमञ्जीवेब्भ्यं÷ । परिधिन्दंधामिमैषान्नुगादपंरोऽअत्त्थंमेत

त् ॥ शुतञ्जीवन्तुशुरदंःपुरूचीरुन्तम्मृत्युन्दंधताम्पर्वतेन ॥ १५ ॥
अग्नुऽआयूंᳬषि । पवसुऽआसुवोर्ज्जुमिषञ्चनः ॥ आरेबाधस्वदुच्छु
नाम् ॥ १६ ॥ आयुष्म्मानग्ने । हुविषांवृधानोघृतप्प्रतीकोघृतयो
निरेधि ॥ घृतम्पीत्त्वामधुचारुगव्यम्पितेवपुत्रमुभिरंक्षतादिमान्त्स्वा
हा ॥ १७ ॥ परीमे । गामनेषतुपर्य्युग्निमंहृषत ॥ देवेष्ष्वक्रतुश्रवः
कऽइमाँऽआदंधर्षति ॥ १८ ॥ क्रव्यादमुग्निम् ॥ क्रव्यादमुग्नि
म्प्रहिणोमिदूरंयुमराज्ज्यङ्गच्छतुरिप्रवाहः ॥ इहैवायमितरोजुात
वेदादेवेभ्योहुव्यंवहतुप्प्रजानन् ॥ १९ ॥ वर्हम्वपाम् ॥ वर्हम्वपाञ्जात

वेदꣳपितृभ्योयत्रैनाꣳवेत्थनिहिताम्पराके ॥ मेदसःकुल्याउपता
न्त्स्रवन्तुसत्याएषामाशिषःसन्नमन्ताꣳस्वाहा ॥ २० ॥ स्योना
पृथिवि । नोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्प्रथाः ॥ अप
नःशोशुचदघम् ॥ २१ ॥ अस्मात्त्वम् ॥ अस्मात्त्वमधिजातो
सित्त्वदयञ्जायताम्पुनः ॥ असौस्वर्गायलोकायस्वाहा ॥ २२ ॥
[ १२ ] ॥ इति श्रीशुक्लयजुःसंहितापाठे पञ्चत्रिꣳशोऽध्यायः ॥३५॥
ऋचंवाचꣳषोडशद्यौःशांतिरष्टौद्वौचतुर्विꣳशतिः ॥ हरिः ॐऋचंवाच
म् ॥ ऋचंवाचम्प्रपद्येमनोयजुःप्प्रपद्येसामप्प्राणम्प्रपद्येचक्षुःश्श्रोत्र

म्प्रपंद्ये ॥ व्वागोजं॑ःसुहौजोमयिंप्प्राणापानौ ॥ १ ॥ यन्मे । च्छिद्रञ्चक्षुंषोहृदंयस्युमनंसोव्वातितृणम्बृहस्प्पतिंम्मेतद्दंधातु ॥ शन्नोंभवतुभुवंनस्युयस्प्पतिंः ॥ २ ॥ भ०र्भुवं॑ः ॥ भू॰र्भुवुःस्स्वस्तत्त्संवितुर्व्वरेंण्युम्भर्गोंदेवस्यंधीमहि ॥ धियोयोनं॑ःप्प्रचोदयांत् ॥ ३ ॥ कयांनश्चित्रऽआभुंवदूतीसुदावृंधुःसखां ॥ कयाशचिंष्ठयावृता ॥ ४ ॥ कस्त्त्वां । सुत्त्योमदांनाम्मर्ठहिंष्ठोमत्त्सुदन्धंसः ॥ दृढाचिंदारुजेव्वसुं ॥ ५ ॥ अभीषुणःसखीनामविताजंरितॄणाम् ॥ शतम्भंवास्यूतिभिंः ॥ ६ ॥ कयात्त्वम् ॥ कयात्त्वन्नंऽऊत्त्याभिप्प्रमं

न्देसंवृधन् ॥ कयांस्तोतृब्भ्युऽआभंर ॥ ७ ॥ इन्द्रोविश्वंस्यराज
ति ॥ शन्नोऽअस्तुद्द्विपदेशञ्चतुंष्पदे ॥ ८ ॥ शन्नोंमित्रꣳशंवरुंणꣳशन्नो
भवत्त्वर्य्यमा ॥ शन्नुऽइन्द्रोवृहस्प्पतिꣳशन्नोविष्ण्णुरुरुक्क्रमः ॥ ९ ॥
शन्नोवातंः । पवताꣳशन्नंस्तपतुसूर्य्यंः ॥ शन्नःकनिंक्रदद्देवःपर्ज्ज
न्न्योऽअभिवंर्षतु ॥ १० ॥ अहांनिशम् ॥ अहांनिशम्भंवन्तुनꣳ
शꣳरात्रीꣳप्प्रातिंधीयताम् ॥ शन्नंऽइन्द्राग्नीभंवतामवोभिꣳशन्नुऽइन्द्रा
वरुंणारातहंव्या ॥ शन्नंऽइन्द्रापूषणावाजंसातौशमिन्द्रासोमांसुविता
यशंय्योः ॥ ११ ॥ शन्नंः ॥ शन्नोंदेवीरभिष्टंयुऽआपोंभवन्तुपीतयें ॥

शंठ्योरुभिस्रवन्तुनः ॥ १२ ॥ स्योनापृथिवि । नोभवानृक्षरानिवे
शंनी ॥ यच्छांनुःशर्म्मसुप्प्रथाः ॥ १३ ॥ आपोहि । ष्ठामयोभुव
स्तानऽऊर्ज्जेदधातन ॥ महेरणायचक्षसे ॥ १४ ॥ योवःशिवतमो
रसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ १५ ॥ तस्म्माऽअ
रंम् ॥ तस्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाच
नः ॥१६॥[१६] द्यौःशान्तिः ॥ द्यौःशान्तिरन्तरिक्षःशान्तिःपृथिवी
शान्तिरापःशान्तिरोषधयःशान्तिः ॥ वनस्पतयःशान्तिर्विश्वेदेवाः
शान्तिर्ब्रह्मशान्तिःसर्व्वःशान्तिःशान्तिरेवशान्तिःसामाशान्तिरेधि

॥१७॥दृतेदृꣳहंमा। मित्रस्यंमाचक्षुंषासर्वाणिभूतानिसमींक्षन्ताम्॥ मित्रस्याहञ्चक्षुंषासर्वाणिभूतानिसमींक्षे ॥ मित्रस्यचक्षुंषासमींक्षामहे ॥ १८ ॥ दृतेदृꣳहंमा। ज्योक्तेंसन्दृशिजीव्यासञ्ज्योक्तेंसन्दृशिजीव्यासम् ॥ १९ ॥ नमंस्तेहरंसेशोचिषेनमंस्तेऽअस्त्वर्चिषें ॥ अन्याँस्तेऽअस्मत्तंपन्तुहेतयंःपावकोऽअस्मभ्यꣳशिवोभंव ॥२०॥ नमंस्ते । अस्तुविद्युतेनमंस्तेस्तनयित्नवें ॥ नमंस्तेभगवन्नस्तयतंःस्वःसमीहंसे ॥ २१ ॥ यतोयतःसमीहंसेततोनोऽअभंयङ्कुरु ॥ शन्नंःकुरुप्रजाभ्योभंयन्नःपशुभ्यंः ॥ २२॥ सुमित्रियानंः ॥ सुमि

त्रियानुऽआपुऽओषंधयःसन्तुदुर्म्मित्रियास्तस्म्मैसन्तुठ्योस्म्मान्द्वे
ष्ट्रियञ्चंवुयन्द्विष्म्मः॥ २३ ॥ तच्चक्षुः ॥ तच्चक्षुर्द्देवहितम्पूरस्त्ताच्छु
क्रमुच्चंरत् ॥ पश्येमशरदंःशुतञ्जीवेमशुरदंःशुतᳬशृणुंयामशुरदंःशु
तम्प्रब्रंवामशुरदंःशुतमदींनाःस्यामशुरदंःशुतम्भूयंश्चशरदंःशुतात्॥
॥२४॥ [८] इतिश्रीशुक्लयजुःसंहितापाठे षट्त्रिंशोऽध्यायः॥३६॥देव
स्यत्त्वादशयमायत्त्वैकादशद्वावेकाविᳬशतिः॥ ॐदेवस्यंत्त्वा ॥ सवि
तुःप्प्रंसवेश्विनोर्बाहुभ्यांम्पूष्णोहस्त्ताभ्याम् ॥ आदंदेनारिरसि
॥ १ ॥ युञ्जतेमनंः ॥ युञ्जतेमनंऽउतयुंञ्जतेधियोविप्प्राविप्प्रंस्यबृह

तोर्विपश्चितः॑ ॥ व्रिहोत्रांदधेव्वयुनाविदेकुऽइन्मुहीदेवस्यंसवितुःपरि
ष्टुतिः ॥ २ ॥ देवींद्यावापृथिवी । मुखस्यंवामुद्यशिरोराद्ध्यासन्दे
वयजंनेपृथिव्याः ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णे ॥ ३ ॥ देव्व्योव
म्म्यूः ॥ देव्व्योव्वम्म्योभूतस्यंप्प्रथमुजामुखस्यंवोद्यशिरोराद्ध्यास
न्देवयजंनेपृथिव्याः ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णे ॥ ४ ॥ शतम्
॥१९००॥ इयुत्त्यग्ग्रे ॥ इयुत्त्यग्ग्रंऽआंसीन्मुखस्यंतेद्यशिरोराद्ध्यास
न्देवयजंनेपृथिव्याः ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णे ॥ ५ ॥ इन्द्र
स्यौजः ॥ इन्द्रस्यौजंस्त्थमुखस्यंवोद्यशिरोराद्ध्यासन्देवयजंनेपृ

थिव्याः ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णणें ॥ मुखायंत्त्वामुखस्यंत्त्वा
शीर्ष्णणें ॥ मुखायंत्त्वामुखस्यंशीर्ष्णणें ॥ ६ ॥ प्रैतु ॥ प्रैतुब्रह्मणु
स्पतिःप्रदेव्येतुसूनृता ॥ अच्छावीरन्नर्य्यम्पङ्क्तिराधसन्देवायुज्ञन्न
यन्तुनः ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णणें ॥ मुखायंत्त्वामुखस्यंत्त्वा
शीर्ष्णणें ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णणें ॥ ७ ॥ मुखस्युशिरः ॥ मु
खस्युशिरोसि ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णणें ॥ मुखस्युशिरोसि ॥
मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णणें ॥ मुखस्युशिरोसि ॥ मुखायंत्त्वामु
खस्यंत्त्वाशीर्ष्णणें ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णणें ॥ मुखायंत्त्वामु

खस्यंत्त्वाशीर्ष्णणें ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णणें ॥ ८ ॥ अश्वं
स्यत्त्वा । वृष्णणं÷शुक्नाधूंपयामिदेवयजंनेपृथिव्याऽ ॥ मुखायंत्त्वामु
खस्यंत्त्वाशीर्ष्णणें ॥ अश्वंस्यत्त्वावृष्ष्णण÷शुक्नाधूंपयामिदेवयजंनेपृ
थिव्याः ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णणें ॥ अश्श्वस्यत्त्वावृष्णणं÷शु
क्नाधूंपयामिदेवयजंनेपृथिव्याऽ ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णणें ॥
मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णणें ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णणें ॥
मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णणें ॥ ९ ॥ ऋजवेंत्त्वा । साधवेंत्त्वासुक्षि
त्यैत्त्वां ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णणें ॥ मुखायंत्त्वामुखस्यंत्त्वा

शीर्ष्णे ॥ मुखाय त्त्वा मुखस्य त्त्वा शीर्ष्णे ॥१०॥ [१०] धर्माय त्त्वा ।
मुखाय त्त्वा सूर्यस्य त्त्वा तपसे ॥ देवस्त्त्वा सविता मद्ध्वानक्तु पृथिव्याः
सᳬ स्पृशस्पाहि ॥ अर्च्चिरसि शोचिरसि तपोसि ॥ ११ ॥ अनाधृष्टा
पुरस्तात् ॥ अनाधृष्टा पुरस्तादग्नेराधिपत्त्य ऽआयुर्म्मे दाः पुत्रवती द
क्षिणत ऽइन्द्रस्याधिपत्त्ये प्रजाम्मे दाः सुषदा पश्चाद्देवस्य सवितुराधि
पत्त्ये चक्षुर्म्मे दाऽआश्श्रुतिरुत्तरतो धातुराधिपत्त्ये रायस्पोषम्मे दाः ॥
विधृतिरुपरिष्टाद्बृहस्पतेराधिपत्त्य ऽओजो मे दा विश्श्वाभ्यो मानाष्ट्रा
भ्यस्पाहि मनोरश्वासि ॥ १२ ॥ स्वाहा मरुद्भिः । परिश्श्रीय

स्वर्द्दिवःसुर्ठस्पृशंस्पाहि ॥ मधुमधुमधुं ॥ १३॥ गर्ब्भौदेवानाम् ॥
गर्ब्भौदेवानाम्पितामतीनाम्पतिःप्रजानाम् ॥ सन्देवोदेवेनसवित्रा
गतुसर्ठसूर्य्येणरोचते ॥ १४ ॥ समग्निः ॥ समग्निरग्निनागतुस
न्दैवेनसवित्रासर्ठसूर्य्येणारोचिष्ट ॥ स्वाहासमग्निस्तपसागतुसन्दै
व्येनसवित्रासर्ठसूर्य्येणारूरुचत ॥ १५ ॥ धुर्त्तादिवः ॥ धुर्त्तादिवो
विभातितपसस्पृथिव्यान्धुर्त्तादेवोदेवानाममर्त्यस्तपोजाः ॥ वाचम
स्मेनियच्छदेवायुवम् ॥ १६ ॥ अपश्यङ्गोपाम् ॥ अपश्यङ्गोपाम
निपद्यमानमाचपराचपथिभिश्चरन्तम् ॥ ससध्रीचीःसविषूचीर्वसा

नु॒ऽआव॑रीव॒र्ति॒भुव॑नेष्व॒न्तः ॥ १७ ॥ वि॒श्वासा॑म्भु॒वाम् ॥ वि॒श्वा
साम्भु॒वाम्प॑ते॒वि॒श्वस्य॒मन॑स॒स्प॑ते॒वि॒श्वस्य॒वच॑स॒स्प॑ते॒सर्व॑स्य॒वच॑स
स्पते ॥ दे॒वश्रु॒त्त्वन्दे॑व॒घर्म॑दे॒वोदे॒वान्पा॒ह्यत्र॒प्रावी॒रनु॑वान्दे॒ववी
तये ॥ मधु॑मा॒द्ध्वीभ्या॒म्मधु॑माधू॒चीभ्याम् ॥ १८ ॥ हृ॒देत्त्वा॒ । मन
सेत्त्वादि॒वेत्त्वा॒सू॒र्ययि॑त्त्वा ॥ ऊ॒र्द्ध्वोऽअ॒द्ध्वर॑न्दि॒विदे॒वेषु॑धेहि ॥१९॥ पि॒
ता॒नः॑ ॥ पि॒तानो॑सि॒पि॒तानो॑बो॒धि॒नम॑स्तेऽअस्तु॒मामा॑हिꣳसी ॥ त्वष्टृ
मन्त॒स्त्त्वा॒सपेम॒पु॒त्त्रान्प॒शून्मयि॑धेहि॒प्र॒जाम॒स्म्मासु॑धेह्यरि॑ष्टा॒हꣳस
हप॑त्त्याभूयासम् ॥२०॥ अहः॑केतु॒ना॑ । जु॒षताꣳसु॒ज्ज्यो॑ति॒ज्ज्यो॑ति

षास्वाहा ॥ रात्रिःकेतुनांजुषताᳩसुज्ज्योतिज्ज्योतिषास्वाहा ॥२१॥ [११] इति श्रीवाजसनेयशुक्लयजुःसंहितायां दीर्घपाठे सप्तत्रिᳩशोऽध्यायः ॥ ३७॥ देवस्यत्त्वाष्टौयमायत्त्वाक्षत्रस्यत्त्वादशकौत्रयोष्टाविᳩशतिः ॥ ॐदेवस्यंत्त्वा ॥ देवस्यंत्त्वासवितुःप्प्रसवेश्श्विनोर्बाहुभ्याम्पूष्ण्णोहस्ताभ्याम् ॥ आददेदित्त्यैरास्नासि ॥ १ ॥ इडऽएहि ॥ इडऽएह्यदितऽएहिसरस्वत्त्येहि ॥ असावेह्यसावेह्यसावेहि ॥ २ ॥ अदित्त्यैरास्नासीन्द्राण्याऽउष्णीषः ॥ पूषासिघर्म्मायदीष्ष्व ॥ ३ ॥ अश्श्विभ्याम्पिन्न्वस्वसरस्वत्त्यैपिन्न्वस्वेन्द्रायपिन्न्वस्व॥स्वाहेन्द्रवत्स्वा

हेन्द्रंवृत्तस्वाहेन्द्रंवत् ॥ ४ ॥ यस्तेस्तनंः । शशयोयोमयोभूयर्यौरंत्कु
धावंसुविद्द्वसुदत्रंः॥ येनुविश्श्वापुष्यांसिवाठ्याणिसरंस्वतितामिहधा
तंवेकः ॥ उर्वुन्तरिक्षुमन्वैमि ॥ ५ ॥ गायुत्रञ्छन्दंः ॥ गायुत्रञ्छन्दो
सित्रैष्टुभुञ्छन्दोसिद्यावापृथिवीब्भ्यान्त्वापरिगृल्ल्लाम्म्यन्तरिक्षेणोपं
यच्छामि ॥ इन्द्राश्श्विनामधुनस्सारघस्यंघुर्म्मम्पातुवसंवोयजंतु
वाट्स्वाहासूर्यस्यरश्मयेवृष्टिवनंये ॥ ६ ॥ सुमुद्रायंत्त्वा । वातांयु
स्वाहांसरिरायंत्त्वावातांयुस्वाहा ॥ अनाधृष्ष्यायंत्त्वावातांयुस्वाहा
प्प्रतिधृष्ष्यायंत्त्वावातांयुस्वाहा ॥ अवुस्यवेत्त्वावातांयुस्वाहांशिमि

दायत्त्वावातायस्वाहा ॥ ७ ॥ इन्द्रायत्त्वा । वसुमतेरुद्रवतेस्वाहेन्द्रा
यत्त्वादित्त्यवतेस्वाहेन्द्रायत्त्वाभिमातिघ्नेस्वाहा ॥ सवित्रेत्त्वऽऋभु
मतेविभुमतेवाजवतेस्वाहाबृहस्पतयेत्त्वाविश्श्वदेव्यावतेस्वाहा ॥
॥ ८ ॥ [ ८ ] यमायत्त्वाङ्गिरस्वतेपितृमतेस्वाहा ॥ स्वाहाघर्म्मायु
स्वाहाघर्म्मः पित्रे ॥ ९ ॥ विश्श्वाऽआशाः ॥ विश्श्वाऽआशादक्षि
णसद्विश्श्वान्देवानयाडिह ॥ स्वाहाकृतस्यघर्म्मस्यमधोः पिबतम
श्विना ॥१०॥ दिविधाः ॥ दिविधाऽइमंय्यज्ञमिमंय्यज्ञन्दिविधाः॥
स्वाहाग्नयेयज्ञियायशंय्यजुर्भ्यः ॥ ११ ॥ अश्विनाघर्म्मम् ॥ अ

श्विनाघर्म्मम्पांतुर्ठ॑हार्द्वांनुमहांर्द्दिवाभिरूतिभिः ॥ तन्त्रायिणेनमो
द्यावापृथिवीभ्याम् ॥ १२ ॥ अपांतामश्विनां । घर्म्ममनुद्यावापृथि
वीऽअंमर्ठसाताम् ॥ इहैवरातयंःसन्तु ॥ १३ ॥ इषेपिन्वस्व ॥ इषेपि
न्वस्वोर्ज्जैपिन्वस्वब्रह्मणेपिन्वस्वक्षत्त्रायंपिन्वस्वद्यावापृथिवीभ्यां
म्पिन्वस्व ॥ धर्म्मासिसुधर्म्मामेन्युस्म्मेनृम्णानिधारयब्रह्मंधार
यक्षत्त्रन्धारयविशंन्धारय ॥ १४ ॥ स्वाहांपूष्णे । शरंसेस्वाहाग्ग्रा
वंभ्युःस्वाहांप्रतिरवेभ्यंः ॥ स्वाहांपितृभ्यंऽऊर्द्ध्वबर्हिभ्योघर्म्मु
पावंभ्युःस्वाहाद्यावांपृथिवीभ्या९स्वाहाविश्वेभ्योदेवेभ्यंः ।१५॥

स्वाहारुद्राय । रुद्रहूतयेस्वाहासञ्ज्योतिषाज्योतिः ॥ अहंःकेतुना
जुषताᳪंसुज्योतिर्ज्योतिषास्वाहा ॥ रात्रिःकेतुनाजुषताᳪंसु
ज्योतिर्ज्योतिषास्वाहा ॥ मधुंहुतमिन्द्रंतमेऽअग्नावश्यामंतेदे
वघर्म्मनमंस्तेऽअस्तुमामाहिᳬंसीः ॥ १६ ॥ अभीमम् ॥ अभी
मम्महिमादिवंविप्रोबभूवसुप्रथाः ॥ उतश्श्रवसापृथिवीᳪंसᳬंसी
दस्वमहाँ२ऽअंसिरोचंस्वदेववीतमः ॥ विधूममग्नेऽअरुषम्मियें
ध्यसृजप्रंशस्तदर्शतम् ॥ १७ ॥ यातेंघर्म्मदिव्याशुग्ग्यागायु
त्र्याᳪंहविर्द्धाने ॥ सातऽआप्प्यायतान्निष्ट्यायतान्तस्यैतेस्वाहा ॥

याते॑घर्म्मा॒न्तरि॑क्षे॒शुग्ग्या॒त्रिष्टु॒भ्याग्नी॑द्ध्रे ॥ सात॒ऽआप्प्या॑यता॒न्नि
ष्ट्या॑यता॒न्तस्यै॑ते॒स्वाहा॑ ॥ याते॑घर्म्म॑पृथि॒व्याᳬशुग्ग्या॒जग॑त्त्याᳬ
सद॒स्स्या॑ ॥ सात॒ऽआप्प्या॑यता॒न्निष्ट्या॑यता॒न्तस्यै॑ते॒स्वाहा॑ ॥ १८ ॥
[ १० ] क्ष॒त्रस्य॑त्त्वा । प॒रस्पा॑य॒ब्रह्म॑णस्त॒न्न्व॒म्पाहि ॥ वि॒शस्त्त्वा॒
धर्म्म॑णा॒व॒यम॒नु॑क्क्रामाम॒सु॒वि॒ताय॒नव्य॑से ॥ १९ ॥ चतु॑स्स्रा॒क्कि॒र्न्ना॑
भि॑ः ॥ चतु॑स्स्रा॒क्कि॒र्न्ना॑भि॒र्ऋ॒तस्य॑स॒प्प्रथा॒ऽस॒नो॑वि॒श्वायु॑स्स॒प्प्रथा॒ऽस
नं॑स्स॒र्वायु॑स्स॒प्प्रथा॑ऽ ॥ अप॒द्वेषो॒ऽअप॒ह्वरो॒न्न्यव्व्र॑तस्य॒सश्चि॑म ॥ २० ॥
घर्म्मै॒तत्त ॥ घर्म्मै॒तत्ते॒पुरी॑ष॒न्तेन॒व॒र्द्ध॑स्व॒चाचं॑प्प्याय॒स्व ॥ व॒र्द्धि॒षी॒

महिंचह्वयमाचंप्प्यासिषीमहि ॥ २१ ॥ अचिंक्कदुद्वृषाहरिम्मुहा
न्मित्रोनदर्शतः ॥ सꣳसूर्य्येणदिद्युतदुदधिर्न्निधिः ॥ २२ ॥ सुमि
त्रियानः ॥ सुमित्रियानऽआपऽओषधयः सन्तुदुर्म्मित्रियास्तस्मै
सन्तुयोस्मान्द्वेष्टियञ्चवयन्द्विष्म्मः ॥ २३ ॥ उद्वयम् ॥ उद्वयन्तमसस्
स्पारिस्वःपश्श्यन्तऽउत्तरम् ॥ देवन्देवत्रासूर्य्यमगन्म्मज्ज्योतिरुत्तम
म् ॥ २४ ॥ एधोसि ॥ एधोस्येधिषीमहिसमिदसितेजोसितेजोमयि
धेहि ॥ २५ ॥ यावतीद्यावापृथिवी ॥ यावच्चसप्तसिन्धवोवितस्थिरे ॥
तावन्तमिन्द्रतेग्ग्रहमूर्ज्जागृह्णाम्म्यक्षितम्मयिगृह्णाम्म्यक्षितम् ।२६॥

मयित्त्यत् ॥ मयित्त्यदिंन्द्रियम्बृहन्मयिदक्षोमयिक्रतुं÷ ॥ घर्म्मस्त्रि
शुग्ग्विराजतिव्विराजाज्ज्योतिषासहब्रह्मणातेजसासह ॥ २७ ॥
पयंसोरेतः ॥ पयंसोरेतऽआभृतन्तस्यदोहमशीमह्युत्तरामुत्तराᳪंसमां
मांम् ॥ त्त्विषं÷संवृक्क्त्वेदक्षस्यतेसुषुम्मणस्यतेसुषुम्मणाग्निहुतः ॥
इन्द्रंपीतस्यप्प्रजापतिभक्षितस्यमधुमतऽउपंहूतऽउपंहूतस्यभक्षया
मि ॥ २८ ॥ [ १० ] इति श्रीशुक्लयजुःसंहितायामष्टात्रिंशोऽ
ध्यायः ॥ ३८ ॥ स्वाहाप्राणेभ्यःषड्ग्यश्चसप्तद्वौत्रयोदश ॥ ॐस्वाहा
प्प्राणेभ्यं÷ ॥ स्वाहाप्प्राणेभ्यःसाधिपतिकेभ्यः॥ पृथिव्यैस्वाहाग्न

येस्वाहान्तरिक्षायस्वाहावायवेस्वाहा ॥ दिवेस्वाहासूर्य्यायस्वाहा ॥
॥ १ ॥ दिग्भ्यः स्वाहा । चन्द्रायस्वाहानक्षत्रेभ्यः स्वाहाद्भ्यः स्वाहा
वरुणायस्वाहा ॥ नाभ्यैस्वाहापूतायस्वाहा ॥ २ ॥ वाचेस्वाहा ।
प्राणायस्वाहा प्राणायस्वाहा ॥ चक्षुषेस्वाहाचक्षुषेस्वाहा ॥ श्रोत्राय
स्वाहाश्रोत्रायस्वाहा ॥ ३ ॥ मनसः काममम् ॥ मनसः काममाकू
तिंवाचः सत्त्यमशीय ॥ पशूनांरूपमन्नस्यरसोयशः श्रीः श्रयताम्म
यिस्वाहा ॥ ४ ॥ प्रजापतिः । सम्भ्रियमाणः सम्म्राट्सम्भृतोवैश्वदे
वः संसन्नोघर्म्मः प्रवृक्तस्तेजऽउद्यतऽआश्विनः पयस्यानीयमानेपौ

ष्णोतिष्ठ्यन्दमानो मारुतः क्लथन् ॥ मैत्रः शरासि सन्ताप्यमानो वायु
र्हृयो ह्रियमाणऽआग्नेयो हूयमानो वाग्घुतः ॥५॥ सविता प्रथमेऽहन्न
ग्निर्द्वितीये वायुस्तृतीयऽआदित्यश्चतुर्थे चन्द्रमाः पञ्चमऽऋतुः षष्ठे म
रुतः सप्तमे बृहस्पतिरष्टमे ॥ मित्रो नवमे वरुणो दशमऽइन्द्रऽएकाद
शे विश्वेदेवा द्वादशे ॥ ६ ॥ उग्रश्च । भीमश्च ध्वान्तश्च धुनिश्च ॥
सासह्वांश्चाभियुग्वा च विक्षिपः स्वाहा ॥ ७ ॥ अग्निꣳ हृदयेन ॥ अ
ग्निꣳ हृदयेनाशनिꣳ हृदयाग्रेण पशुपतिं कृत्स्नहृदयेन भवं यक्ना ॥
शर्वं मतस्नाभ्यामीशानं मन्युना महादेवमन्तः पर्शव्येनोग्रं देवं

वनिष्ठुनांवसिष्ठहनुःशिङ्गीनिकोश्याभ्यांम् ॥ ८ ॥ उग्रँल्लोहितेनमि
त्रꣳसौव्रत्त्येनरुद्रन्दौर्व्रत्त्येनेन्द्रंम्प्रक्क्रीडेनंमरुतोबलेनसाद्ध्यान्प्रमु
दां ॥ भवस्यकण्ठ्यꣳरुद्रस्यान्तःपार्श्व्यम्महादेवस्ययकृच्छर्वस्यव
निष्ठुःपशुपतेःपुरीतत् ॥९॥ लोमभ्यःस्वाहा ॥ लोमभ्यःस्वाहात्त्व
चेस्वाहात्त्वचेस्वाहालोहितायस्वाहालोहितायस्वाहामेदोभ्यःस्वा
हामेदोभ्यःस्वाहा ॥ माꣳसेभ्यःस्वाहामाꣳसेभ्यःस्वाहास्नाा
वभ्यःस्वाहास्नावभ्यःस्वाहास्थभ्यःस्वाहास्थभ्यःस्वाहामज्ज
भ्यःस्वाहामज्जभ्यःस्वाहा ॥ रेतसेस्वाहापायवेस्वाहा ॥ १० ॥ आया

सायुस्वाहा । प्प्रयासायुस्वाहासंठ्यासायुस्वाहावियासायुस्वाहो
द्यासायुस्वाहा ॥ शुचेस्वाहाशोचंतेस्वाहाशोचंमानायुस्वाहाशोका
युस्वाहा ॥ ११ ॥ तपंसेस्वाहा ॥ तपंसेस्वाहातप्यंतेस्वाहातप्यंमा
नायुस्वाहातप्तायुस्वाहाघर्म्मायुस्वाहा ॥ निष्कृंत्त्यैस्वाहाप्प्रायंश्चि
त्त्यैस्वाहाभेषुजायुस्वाहा ॥ १२ ॥ युमायुस्वाहा ॥ युमायुस्वाहान्त
कायुस्वाहामृत्त्यवेस्वाहा ॥ ब्रह्मंणेस्वाहाब्रह्महुत्त्यायैस्वाहाविश्श्वे
भ्योदेवेभ्युःस्वाहाद्यावांपृथिवीभ्याछंस्वाहा ॥ १३ ॥ इति श्रीशु
क्लयजुःसंहितायां दीर्घपाठे एकोनचत्त्वारिंशततमोऽध्यायः ॥३९॥

ईशावास्यमष्टावंधंतमोनवद्वैसप्तदश ॥ ॐईशावास्यम् ॥ ईशावा
स्यमिदꣳसर्वंयत्किञ्चजगत्यांजगत् ॥ तेनत्यक्तेनभुञ्जीथामागृधः
कस्यस्विद्धनम् ॥ १ ॥ कुर्वन्नेव ॥ कुर्वन्नेवेहकर्म्माणिजिजीविषेच्छ
तꣳसमाः ॥ एवन्त्वयिनान्यथेतोऽस्तिनकर्म्मलिप्यतेनरे ॥ २ ॥
असुर्य्यानामतेलोकाऽअन्धेनतमसावृताः ॥ तांस्तेप्रेत्याभिगच्छ
न्तियेकेचात्महनोजनाः ॥ ३ ॥ अनेजदेकम् ॥ अनेजदेकम्मनं
सोजवीयोनैनद्देवाऽआप्नुवन्पूर्वमर्शत् ॥ तद्धावतोऽन्यानत्येतितिष्ठत्त
स्मिन्नपोमातरिश्वादधाति ॥ ४ ॥ तदेजति । तन्नैजतितद्दूरेतद्वन्ति

के ॥ तदुन्तरंस्युसर्व्वस्युतदुसर्व्वस्यास्यबाह्युतः ॥५॥ यस्तु ॥ यस्तु
सर्व्वाणिभूतान्यात्त्मन्नेवानुपश्यति ॥ सुर्वभूतेषुंचात्त्मानुन्ततोनवि
च्चिकित्त्सति ॥ ६ ॥ यस्मिन्त्सर्व्वाणिभूतान्यात्त्मैवाभूद्विजानुतः॥
तत्त्रकोमोहुःकःशोकंऽएकुत्त्वमंनुपश्यंतः ॥ ७ ॥ सपरि ॥ सपर्य्यं
गाच्छुक्रमंकायमंव्रणमंस्न्नाविरᳫंशुद्धमपापविद्धम् ॥ कविर्म्मनी
षीपरिभूःस्वयंम्भूर्य्याथातत्थ्युतोर्त्थान्व्यदधाच्छाश्वतीब्भ्युःसमा
ब्भ्यः ॥ ८ ॥ अन्धन्तमुः । प्प्रविंशन्तियेसंम्भूतिमुपासंते ॥ ततो
भूयऽइवुंतेतमोयऽउसम्भूंत्त्यांᳫंरताः ॥ ९ ॥ अुन्यदेव ॥ अुन्यदेवा

हुऽसंम्भुवादुन्यदांहुरसंम्भवात् ॥ इतिशुश्रुमधीराणांऽयेनुस्तद्विंच
चाक्षिरे ॥ १० ॥ सम्भूंतिश्च । विनाशञ्चुयस्तद्वेदोभयंऽसुह ॥ विना
शेनंमृत्युन्तीर्त्वासम्भूंत्यामृतंमश्नुते ॥ ११ ॥ अन्धन्तमः । प्रवि
शन्तियेविंद्यामुपासंते ॥ ततोभूयंऽइवतेतमोयऽउविद्यायांरताः ॥
॥ १२ ॥ अन्यदेव ॥ अन्यदेवाहुर्विद्यायांऽअन्यदांहुरविंद्यायाः ॥ इ
तिशुश्रुमधीराणांऽयेनुस्तद्विंचचाक्षिरे ॥ १३ ॥ विद्याञ्चं ॥ विद्याञ्चा
विंद्याञ्चुयस्तद्वेदोभयंऽसुह ॥ अविंद्ययामृत्युन्तीर्त्वाविद्ययामृतंम
श्नुते ॥ १४ ॥ वायुरनिंलम् ॥ वायुरनिंलमुमृतमथेदम्भस्मान्तुऽ

शरीरम् ॥ ओ३म् क्रतोस्म्मर ॥ क्लिबेस्म्मर ॥ कृतꣳस्म्मर ॥१५॥ अग्ग्नेनय । सुपथाराये॒ऽअस्म्मान्विश्श्वानिदेववयुनानिविद्वान् ॥ युयोद्ध्यस्म्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउक्तिंविधेम ॥ १६ ॥ हिरण्मयेनपात्रेण । सत्त्यास्यापिहितम्मुखम् ॥ योसावादित्त्येपुरुषः सोसावहम् ॥ १७ ॥ ओ३म् खम्ब्रह्म ॥ १८ ॥ इति श्रीवाजसनेयसंहितायां दीर्घपाठे चत्वारिंशत्तमोऽध्यायः ॥४०॥ श्रीवेदपुरुषार्पणमस्तु ॥ ॥ ॐनमोभगवतेवासुदेवाय ॥ ॐनमोभगवतेशङ्कराय ॥ ॥ दशाध्यायेसमाख्यातानुवाकाःसर्वसङ्ख्यया ॥ शतंदशानु

वाकाश्चनवान्येचमनीषिभिः ॥ १ ॥ सप्तषष्ठिश्चितोज्ञेयाःसौत्रेद्वाविंश
तिस्तथा ॥ अश्वएकोनपंचाशत्पंचत्रिंशत्खिलेस्मृताः ॥ २ ॥ शुक्रि
येपुतुविज्ञेयाएकादशमनीषिभिः ॥ एकीकृत्यसमाख्यातंत्रिशतंव्य
धिकंमतम् ॥ ३ ॥ ॥ इति वाजसनेयसंहितायामनुवाकाःसमाप्ताः ॥

॥ श्रीगणेशाय नमः ॥ अथ प्रतिज्ञा ॥ मन्त्रब्राह्मणयोर्वेदनामधेयं त
स्मिञ्छुक्ले याजुषाम्नाये माध्यन्दिनीयके मन्त्रे स्वरप्रक्रिया ह्यनुदा
त्तो मूर्ध्युदात्तः श्रुतिमूले स्वरित एवं जात्यादयोऽभिहिता ब्राह्मणे
तूदात्तानुदात्तौ भाषिकस्वारौ तानस्वराणि छन्दोवत्सूत्राणि ॥ १ ॥

अथान्तस्थानामाद्यस्य पदादिस्थस्यान्यहलसंयुक्तस्य संयुक्तस्या
पि रेफोष्मान्त्याभ्यामृकारेण चाविशेषेणादिमध्यावसानेषूच्चारणे
जकारोच्चारणं द्विर्भावेप्येवमथापरांतस्थस्यायुक्तान्यहलः संयुक्तस्यो
ष्मऽऋकारै रेकारसहितोच्चारणमेवं तृतीयांतस्थस्य क्वचिद्दकारस्य
तु संयुक्तासंयुक्तस्याविशेषेण सर्वत्रैवमथान्त्यस्यान्तस्थानां पदादि
मध्यान्तस्थस्य त्रिविधं गुरुमध्यलघुवृत्तिभिरुच्चारणमथो मूर्द्धन्यो
ष्मणोऽसंयुक्तस्य टुमृतेसंयुक्तस्य च खकारोच्चारणमध्ययनादिकर्म
स्वर्थवेलायां प्रकृत्या ॥२॥ अथानुस्वारस्यङ्क्ङ्इत्यादेशः शषसहरेफेषु

तस्य त्रैविध्यमाख्यातं ह्रस्वदीर्घगुरुभेदैर्दीर्घात्परो ह्रस्वो ह्रस्वात्परो दीर्घौ गुरौ परे गुरुः परसवर्णषत्प्रकृत्या चान्यत्र विसर्गेष्वीषद्विरामः पदाद्यस्य संयुक्ताकारस्येषद्दीर्घता च भवतीषद्दीर्घता च भवति ॥ ३ ॥ इति कात्यायनपरिशिष्टसूत्रं समाप्तम् ॥ ॥ ॥

॥ श्रीगणेशाय नमः ॥ ॥ अथ वेदपारायणविधिः ॥ ॥ स्थंडिलंकल्पयित्वाग्निमुपसमाधायसंपरिस्तीर्याज्येनैताभ्योदेवताभ्योजुहोतिअग्नयेसोमायेंद्रायविश्वेभ्योदेवेभ्यःऋषिभ्यऋग्भ्योयजुर्भ्यःसामभ्यःश्रद्धायैप्रज्ञायैमेधायैधारणायैश्रियैह्रियैसावित्र्यैसावित्रेप्रजापतये

कांडऋषयेसोमायकांडऋषयेअग्नयेकांडऋषयेविश्वेभ्योदेवेभ्यःकांड
ऋषिभ्यःसंहिताभ्योदेवताभ्यउपनिषद्भ्योयाज्ञिकीभ्योदेवताभ्यउप
निषद्भ्योवारुणीभ्योदेवताभ्यउपनिषद्भ्योहव्यवाहायविश्वेभ्यऋग्गणे
भ्योऽनुमत्यैस्विष्टकृतेचपृथक्स्वाहाकारेणव्याहृतिभिश्चपुनःपरिषिंच
ति ॥ समाप्तेचैतायजुषातर्पयति । एवमृग्वेदस्यकांडऋष्यादिवर्ज्य
मास्विष्टकृतस्तेषांस्थानेशतर्चिभ्योमाध्यमेभ्योगृत्समदायविश्वामि
त्रायवामदेवायात्रयेभरद्वाजायजामदग्न्यायगौतमायवसिष्ठायप्रगा
थेभ्यःपावमानीभ्योदेवताभ्यःक्षुद्रसूक्तेभ्योमहासूक्तेभ्योमहानाम्नी

भ्यइति ॥ ततोवेदादिमारभ्यसंततमधीयीतेत्याहभगवान्बौधाय
नः ॥ इति वेदपारायणोपक्रमविधिः ॥ ॥ अथ वेदपारायणे कलश
प्रतिष्ठापनादिप्रकारः ॥ तीर्थे देवालये गेहे प्रशस्ते सुपरिष्कृते ॥ कल
शंसुदृढंतत्र सुनिर्णिक्तं विभूषितम् ॥ पुष्पपल्लवमालाभिश्चन्दनैःकुंकु
मादिभिः॥मृत्तिकाभिश्चसंमिश्रंवेदिमध्येन्यसेत्ततः ॥ पंचाशद्भिःकुशैः
कार्योब्रह्मापश्चान्मुखस्थितः ॥ स्नापितःस्थापितः कुम्भेचतुर्बाहुश्चतु
र्मुखः ॥वत्सजान्वाकृतिंदण्डमुत्तराग्रैःकुशैःकृतम्॥ब्रह्मोपधानंदत्त्वातं
ततःस्वस्त्ययनंपठेत् ॥ प्रतिष्ठांकारयेत्पश्चात्पूजाद्रव्यमथोच्यते ॥

यज्ञोपवीतनैवेद्यवस्त्रचन्दनकुंकुमैः । स्रग्धूपदीपतांबूलैरक्षतैश्चापिता महम् ॥ ब्रह्मयज्ञानमिति वागायत्र्यावाप्रपूजयेत् ॥ उपाध्यायश्चसंपूज्योयथापाठंपठेत्ततः॥ इति वेदपारायणेकलशप्रतिष्ठापनादिप्रकारः॥

॥ ॥ अथानक्षत्पारायणविधिः ॥ ॥ अथातोनक्षत्पारायणविधिं व्याख्यास्यामः ॥ आसमाप्तेर्नाश्नीयात् यथाशक्तिवाऽऽपःपयः फलान्योदनंवाहविष्यमल्पं भुक्त्वातदाशेषमधीयीत ॥ ग्रामात्प्राचीमुदीचींवादिशमुपगम्याग्निमुपसमाधाय परिस्तीर्येध्मं प्रदायाज्येनैताभ्योदेवताभ्योजुहोति ॥ अग्नये सोमायेन्द्राय प्रजापतये बृहस्प

तयेविश्वेभ्यो देवेभ्यो ब्रह्मणे ऋषिभ्यऋग्भ्यो यजुर्भ्यः श्रद्धायै मेधायै
प्रज्ञायै धारणायै सदसस्पतये अनुमतये श्रियै ह्रियै सावित्र्यै सवित्रे
प्रजापतये कांडऋषये सोमाय कांडऋषये विश्वेभ्यो देवेभ्यःकांडऋषि
भ्यःसाहितीभ्योदेवताभ्य उपनिषद्भ्यो याज्ञिकीभ्यो देवताभ्य उप
निषद्भ्यो वारुणीभ्यो देवताभ्य उपनिषद्भ्योहव्यवाहाय विश्वेभ्यऋ
ग्गणेभ्य अनुमत्यै स्विष्टकृतेच पृथक्स्वाहाकारेण हुत्वा व्याहृतिभि
श्च पुनःपरिषिञ्चति ॥ समाप्तेचैतायजुषा तर्पयति एवमृग्वेदिकानां
कांडऋष्यादिवर्जमास्विष्टकृतस्तेषांस्थाने शतर्चिभ्यो माध्यमेभ्यो

गृत्समदाय विश्वामित्राय वामदेवायात्रये भरद्वाजाय जामदग्न्याय गौतमाय वासिष्ठाय प्रगाथेभ्यः पावमानीभ्यः क्षुद्रसूक्तेभ्योमहानाम्नीभ्य इति ॥ ततो वेदादिमारभ्य संततमधीयीत ॥ नास्यान्तरानध्यायो नास्यान्तराजननमरणेअशुचीनान्तराव्याहरेन्नान्तराविरमेत् या वदन्तमधीयीत ॥ यद्यन्तराविरमेत्त्रीन्प्राणायामानायम्य प्रणवं वा प्रणिधाय यावत्कालमधीयीत ॥ ततः सर्वं निशोनिशान्तरं संग्रामारण्यसलिलं प्रलोप्यपरिदध्यात् ॥ आदावन्तेच ब्राह्मणभोजनं दक्षिणादानंच दद्यात् ॥ परातेन विधिनावेदमधीयीत सततः पूतोवे

दोभवति मनःशुद्धश्वभवति॥द्वाभ्यां पारायणाभ्यां ऋग्भिश्च॥भोजन
इहाधीत अनृतेभ्यः प्रमुच्यते॥ त्रिभिर्बहुभ्यः पातकोपपातकेभ्यः शू
द्रायां रेतःसिक्त्वागंगासुनिमज्जंश्वभवति॥चतुर्भ्यः शूद्रान्नभोजनात्त
त्सेवनात्तत्स्त्रीसेवनाच्च ॥ पञ्चभिरयाज्ययाजनात्पूतोभवति ॥ अग्रा
ह्यग्रहणादग्राह्याग्रहणादभ्यासोपासनाच्च षड्भिर्ब्राह्मणस्य लोहित
करणात्स्त्रीलोहितकरणात्पशुहननात्सुवर्णस्तेयात्पतितसंप्रयोगाच्च।
सप्तभिः प्राजापत्यानांहीनाचरणाद्यज्ञोपवेधनाच्च ॥ अष्टभिश्चान्द्रा
यणस्यान्तरानाचरणाद्गुरुतल्पगमनाद्रजस्वलागमनाच्च ॥ नवभिः

सुरापानाच्च ॥ दशभिरश्रोत्रिययाजनादसोमपानादन्यायतश्च ॥ ए
कादशभिर्ब्राह्मणहननाद्गर्भहननात् ॥ द्वादशभिःपूर्वजन्मेहजन्मकृतैः
सर्वैः पापैः प्रमुच्यते स्वर्गलोकं गच्छति पितॄन्स्वर्गलोकं गमयत्य
ग्निष्टोमादीन्क्रतून्यजाति तैः क्रतुभिरिष्टंभवति ॥ वेदाध्यायी सदै
वस्याद्यथावैसत्यवाक्शुचिः ॥ यंयंकामयतेकामंतंतंवेदेनसाधयेत् ।
असाध्यं नास्ति यत्किंचिद्ब्रह्मणोहिफलंमहद्ब्रह्मणोहिफलंमहादिति
समाप्तौ यजुषातर्पयतीति ॥ समाप्ते वेदपरायणे समाप्ते एतादेवताःपू
र्वोक्ताअग्निसोमाद्यजुषातर्पयति यजुर्वेदपरायणे तस्यवेदस्यप्राधान्य

मुच्यते अथवाभूरादिव्याहृतिचतुष्टयात्मकं यजुःशब्देनगृह्यते ॥ तेनै
तदुक्तंभवति ॥ भूर्देवांस्तर्पयामीत्यनेनप्रकारेणतर्पयित्वा अग्नि
सोमादींस्तर्पयेदिति ॥ नास्यांतराजननमरणे ॥ अशुचीइतिनाशुचि
हेतुभूतेइत्यर्थः ॥ नांतराव्याहरेदिति ॥ उपक्रांतवेदपारायणमध्ये न
व्याहरेन्नाध्यापयेत्तथा लौकिकवचनमपि न ब्रूयात् ॥ विहितं नित्य
नैमित्तिकं कर्मानुपयुक्त्वावर्त्कि न कुर्यादित्यर्थः ॥ निशोनिशान्तरं
संग्रामारण्यसलिलं लोप्यपरिदध्यादिति लोप्यछित्त्वापरिहार्य्यं वर्ज
यित्वेत्यर्थः इतियावत् ॥ परिदध्यात्समापयेत् ॥ निशान्तरं निशी

थः संध्यावा ॥सलिलं वृष्टिरुदकसमीपभूमिकावा॥निशादिकालान्दे
शांश्चवर्जयित्त्वा समापयेदित्त्यर्थः ॥ सततः पूतोवेदोभवतीति वेदो
भवति वेदात्मको भवति उत्कृष्टज्ञानवान्भवेदित्यर्थः ॥ द्वाभ्यां पारा
यणाभ्यां ऋग्भिश्चेति ऋग्भिः पावमानीभिः पारायणद्वयं पावमान्य
श्चमिलित्वोक्तफलायकल्प्येते इत्यर्थः ॥एवमुत्तरत्र पारायणत्रयं गंगा
स्नानंचामिलित्वा साधनम्॥निमज्जंश्च भवति पूतोभवतीत्त्यर्थः॥ प्रजा
पत्यानाचरणं प्रक्रान्तप्राजापत्यानामननुष्ठानम् एवं चान्द्रायणस्या
नाचरणं यज्ञोपवेधनं यज्ञविनाशः ॥ इत्यनक्षत्पारायणविधिः ॥

# ॥ अथ याज्ञवल्क्यशिक्षाप्रारम्भः ॥

श्रीगणेशाय नमः ॥ ॥ अथ याज्ञवल्क्यशिक्षाप्रारम्भः ॥ ॥ अथात
स्त्रैस्वर्यंलक्षणंव्याख्यास्यामः॥उदात्तश्चानुदात्तश्चस्वरितश्चतथैवच ॥
लक्षणंवर्णयिष्यामिदैवतंस्थानमेवच ॥ १ ॥ शुक्लमुच्चंविजानीयान्नीचं
लोहितमुच्यते ॥ श्यामंतुस्वरितंविद्यादग्निरुच्चेतुदैवतम् ॥ २ ॥ नीचे
सोमंविजानीयात्स्वरितेसविताभवेत् ॥ उदात्तंब्राह्मणंविद्यान्नीचःक्ष
त्रियउच्यते ॥ ३ ॥ वैश्यंतुस्वरितंविद्याद्भारद्वाजमुदात्तकम् ॥ नीचं
गौतममित्याहुर्गार्ग्यंचस्वरितंविदुः ॥ ४ ॥ विद्यादुदात्तंगायत्रंनीचंत्रै
ष्टुभमुच्यते ॥ जागतंस्वरितंविद्यादतएवंनियोगतः ॥ ५ ॥ गांधर्ववेदे

येप्रोक्ताःसप्तषड्जादयःस्वराः ॥ तएववेदेविज्ञेयास्त्रयउच्चादयःस्वराः
॥ ६ ॥ उच्चौनिषादगांधारौनीचौऋषभधैवतौ ॥ शेषास्तुस्वरिताज्ञे
याःषड्जमध्यमपंचमाः ॥ ७ ॥ षड्जोवेदेशिखंडीस्यादृषभःस्याद
जामुखे ॥ गावोरटंतिगांधारंक्रौंचाश्चैवतुमध्यमम् ॥८॥ कोकिलःपञ्च
मोज्ञेयोनिषादंतुवदेद्गजः ॥ आश्वश्चधैवतोज्ञेयःस्वराःसप्तेतिगीयते
॥ ९ ॥ निमेषमात्रःकालःस्याद्विद्युत्कालस्तथापरे ॥ अक्षरात्तुल्ययो
गाच्चमतिःस्यात्सोमशर्मणः ॥१०॥ सूर्यरश्मिप्रकाशाद्याकणिकायत्र
दृश्यते ॥ आणवस्यतुसामात्रामात्राचचतुराणवा ॥ ११ ॥ स्नानस्चा

णवंविंद्यात्कण्ठेविंद्याद्विराणवम् ॥ त्रिराणवंतुजिह्वाग्रेनिस्सृतंमात्रिकं
विदुः ॥ १२ ॥ अवग्रहेतुकालःस्याद‍र्धमात्राप्रकीर्त्तिता ॥ पदयोरंतरे
कालएकमात्राविधीयते ॥१३॥ ऋचोर्द्धेतुद्विमात्रःस्यात्रिमात्रःस्याद्द
गंतके ॥ रिक्तंतुपाणिमुत्क्षिप्यद्वेमात्रेधारयेद्बुधः ॥१४॥ एकमात्रोभ
वेद्ध्रस्वोद्विमात्रोदीर्घउच्यते ॥ त्रिमात्रस्तुप्लुतोज्ञेयोव्यंजनश्चार्द्धमात्र
कम् ॥ १५ ॥ विवृतौचावसानेचऋचोर्द्धेचतथापरे ॥ पदेचपादसं
स्थानेशून्यहस्तंविधीयते ॥ १६ ॥ प्रणवंतुप्लुतंकुर्याद्व्याहृतीर्मातृका
विदुः ॥ चाषस्तुवदतेमात्रांद्विमात्रांवायसोऽब्रवीत् ॥१७॥ शिखीव

देत्रिमात्रांवैमात्राणामितिसंस्थितिः ॥ वर्णोजातिश्चमात्राचगोत्रंछं
न्दश्चदैवतम् ॥ १८ ॥ एतत्सर्वंसमाख्यातंयाज्ञवल्क्येनधीमता ॥ ह
स्तौतुसंयतौधार्यौजानुभ्यामुपरिस्थितौ ॥ १९ ॥ गुरोरनुमतंकुर्या
त्पठन्नान्यमतिर्भवेत् ॥ ऊरुभागेतृतीयेतुकरंविन्यस्यदक्षिणम्॥२०॥
प्रसन्नमानसोभूत्वाकिंचिन्निम्नमधोमुखम् ॥ प्रणवंप्राक्प्रयुञ्जीतव्या
हृतीस्तदनंतरम् ॥ २१ ॥ सावित्रींचानुपूर्व्येणततोवेदान्समारभेत् ॥
कूर्मोऽङ्गानीवसंहृत्यचेष्टांदृष्टिंदृढंमनः ॥२२॥ स्वस्थःप्रशांतोनिर्भीको
वर्णानुच्चारयेद्बुधः ॥ नाभ्याहन्यान्नानहन्यान्नगायेन्नैवकंपयेत् ॥२३॥

यथैवोच्चारयेद्वर्णांस्तथैवैतान्समापयन् ॥ निवेश्यदृष्टिंहस्ताग्रेशास्त्रा
र्थमनुचिन्तयेत् ॥ २४ ॥ सममुच्चारयेद्वर्णान्हस्तेनचमुखेनच ॥
स्वरश्चैवतुहस्तश्चद्वावेतौयुगपत्स्थितौ ॥२५॥ हस्तभ्रष्टःस्वरभ्रष्टोनवे
दफलमश्नुते ॥ नकरालोनलंबोष्ठोनाव्यक्तोनानुनासिकः ॥ २६ ॥ गद्ग
दोबद्धजिह्वश्चनवर्णान्वक्तुमर्हति ॥ प्रकृतिर्यस्यकल्याणीदंतोष्ठौयस्य
शोभनौ ॥ २७ ॥ प्रगल्भश्चविनीतश्चसवर्णान्वक्तुमर्हति ॥ शंकितंभीत
मुद्घुष्टमव्यक्तमनुनासिकम् ॥ २८ ॥ काकस्वरंमूर्ध्निगतंतथास्थानवि
वर्जितम् ॥ विस्वरंविरसंचैवाविश्लिष्टंविषमाहतम् ॥ २९ ॥ व्याकुलंता

लहीनंचपाठदोषाश्चतुर्दश ॥ संहितास्वारवहुलःपदसंज्ञासमाकुलः ॥
॥ ३० ॥ क्रमसंधिसमाकीर्णोदुस्तरोमंत्रसागरः ॥ ऋक्संहितांत्रिर
भ्यस्ययजुषांवासमाहितः ॥ ३१ ॥ साम्नांवासरहस्यांचसर्वपापैःप्रमु
च्यते ॥ संहितानयतेसूर्यंपदंचशशिनःपदम् ॥ ३२ ॥ क्रमश्चनयतेसू
क्ष्मंयत्तत्पदमनामयम् ॥ कालिंदीसंहिताज्ञेयापदयुक्तासरस्वती ॥
॥ ३३ ॥ क्रमेणावर्त्ततेगंगाशंभोर्वाणीतुनान्यथा ॥ यथामहाह्रदंप्राप्य
क्षिप्तोलोष्टोविनश्यति ॥ ३४ ॥ एवंदुश्चरितंसर्वंवेदेत्रिवृतिमज्जति ॥
आम्रपालाशबिल्वानामपामार्गशिरीषयोः ॥ वाग्यतःप्रातरुत्था

यभक्षयेद्दंतधावनम् ॥३५॥ खदिरश्चकदंबश्चकरवीरकंरजकौ ॥ ए
तेकंटकिनःपुण्याःक्षीरिणस्तुयशस्विनः ॥ ३६ ॥ तेनास्यकरणेसूक्ष्मं
माधुर्यंचैवजायते ॥ त्रिफलांलवणाक्तांवैभक्षयेच्छिष्यकःसदा ॥ क्षी
णमेधाजनन्येपास्वरवर्णकरीतथा ॥ ३७ ॥ हस्तहीनंतुयोधीतेमंत्रंवे
दविदोविदुः ॥ यजूंषिनोसाधयंतिभुक्तमव्यंजनंयथा ॥ ३८ ॥ हस्त
हीनंतुयोधीतेस्वरवर्णविवर्जितम् ॥ ऋग्यजुस्सामभिर्दग्धोवियोनि
मधिगच्छति ॥ ३९ ॥ ऋचोयजूंषिसामानिहस्तहीनानियःपठेत्॥
अनृचोब्राह्मणस्तावद्यावत्स्वारंनाविंदति ॥ ४० ॥ ज्ञातव्यश्चतथैवा

र्थवेदानांकर्मसिद्धये ॥ पठन्मात्रापपाठात्तुपंकेगौरिवसीदति ॥४१॥
स्वरवर्णंप्रयुंजानोहस्तेनाधीतमाचरन् ॥ ऋग्यजुस्सामभिःपूतोब्रह्म
लोकमवाप्नुयात् ॥ ४२ ॥ नकुर्वीतपदंदीर्घंनकुर्वीतविलंबितम् ॥ पद
स्यग्रहमोक्षौचयथाशीघ्रगतिर्हयः ॥ ४३ ॥ आगमंकुरुयत्नेनकार
णंहितदात्मकम् ॥ आस्येनचशयंकुर्यात्पठन्नान्यमतिर्भवेत् ॥ ४४ ॥
नचास्यमुष्टिवंधीस्यान्नचात्युत्तममाचरेत् ॥ चुलुनौकास्फुटोदंडीस्व
तिकोमुष्टिराकृतिः ॥ एतेवैहस्तदोषाःस्युःपरशुश्चैवसप्तमः ॥ ४५ ॥
यथावाणीतथापाणीरिक्तंतुपरिवर्जयेत् ॥ यत्रयत्रस्थितावाणीपाणि

स्तत्रैवातिष्ठाति ॥ ४६ ॥ यथाधनुष्याविततेशरेक्षिप्तेपुनर्गुणः ॥ स्व
स्थानंप्रतिपद्येततद्वद्धस्तगतःस्वरः ॥ ४७ ॥ उत्तानंसोन्नतंकिंचित्सु
व्यक्तांगुलिरंजितम् ॥ स्वराविद्धंकरंकुर्यात्प्रादेशोद्देशगामिनम् ॥४८॥
अंगुष्ठस्योत्तरेपर्वेतर्जन्युपरियद्भवेत् ॥ प्रादेशस्यतुसोद्देशस्तन्मात्रं
चालयेत्करम् ॥४९॥ मनुष्यतीर्थोच्चंकृत्वापितृतीर्थादकंव्रजेत् ॥ ना
मितंकरपृष्ठेतुसव्यक्तांगुलिमोक्षणम् ॥ ५० ॥ स्वारितेत्र्यंगुलंविद्यान्नि
पातेतुषडंगुलम् ॥ उत्थानेतुनवांगुल्यमेतत्स्वारस्यलक्षणम् ॥५१॥
अभ्यासार्थेद्रुतांवृत्तिंप्रयोगार्थेतुमध्यमाम् ॥ शिष्याणामुपदेशार्थेकु

र्यद्वृत्तिंविलंबिताम् ॥ ५२ ॥ ऐंद्रीतुमध्यमावृत्तिःप्राजापत्याविलंबि
ता ॥ अग्निमारुतयोर्वृत्तिःसर्वशास्त्रेषुनिंदिता ॥ ५३ ॥ मुष्ट्याकृति
मंकारेतुनकारेतुनखाग्रतः ॥ अनुस्वारेंगुष्ठपातऊष्मांतेंगुलिमोक्षणम्
॥ ५४ ॥ उदात्तंभुविपातेनप्रचयंनोग्रएवच ॥ शेषंषडंगुलंविद्यान्नि
चितंतुविधीयते ॥ ५५ ॥ षडंगुलंतुजात्यस्यहस्तस्यानुपथस्यच ॥
तच्चतुर्भागमात्रंतुहस्तस्तेनैववर्तयेत् ॥ ५६ ॥ ककारांतेटकारांतेङ
णेचांगुलिनामयेत् ॥ पंचांगुल्यमकारेतुतकारेकुण्डलाकृतिः ॥५७॥
ऊर्ध्वक्षेपाच्चयोष्माचअधःक्षेपाच्चयोभवेत् ॥ एकैकामुत्सृजेद्धीरःस्व

रितेतूभयंक्षिपेत् ॥ ५८ ॥ अंगुष्ठाकुंचनंलघावनुस्वारेत्वपाठरसम्॥
दीर्घेरंगेचतर्जन्याःप्रसारःपरिकीर्तितः ॥ ५९ ॥ तर्जन्यंगुष्ठयोःस्पर्शे
प्युदात्तंप्रतिविद्यते ॥ नीचंतुमध्यमंकुर्याच्छेषंनीचतरंक्रमात् ॥६०॥
स्वरितंयद्भवेत्किंचिद्रकारसहसंयुतम् ॥ ऊष्माणंतद्विजानीयान्निक्षि
पेदुभयोरपि ॥ ६१ ॥ स्वरितसंज्ञेचानिक्षिप्तेसंयोगोयत्रदृश्यते ॥ द्वि
मात्रिकेभवेदेकमात्रिकेतूभयंक्षिपेत् ॥ ६२ ॥ जात्येचस्वरितेचैववव
कारोयत्रदृश्यते ॥ कर्तव्यस्तूभयोःक्षेपोवायव्यइतिदर्शनम् ॥ ६३ ॥
शृंगवद्वाथवत्सस्यकुमारीकुचयुग्मवत् ॥ उभक्षेपस्वरोयत्रसविसर्गे

उदाहृतः ॥६४॥ विसर्गांतस्वरोयत्रस्वरितोयत्रदृश्यते ॥ दीर्घश्चैवतु
कारश्चतत्रोभक्षेपउच्यते ॥ ६५ ॥ त्रिविधस्तुभवेदूष्माप्रचितावलका
तरा ॥ स्वरितेप्रचिताविद्यान्निपातेवलकांविदुः ॥ ६६ ॥ उत्थानेतुत
थाताराएताभिस्त्रिभिरूष्मभिः॥ मात्रामात्रांविदित्वातुततःक्षेपंप्रयो
जयेत् ॥ ६७ ॥ अक्षरंभजतेकाचित्काचिद्वित्तेप्रतिष्ठितम् ॥ समाने
जातिकाकाचित्काचिदूष्माप्रदायिका ॥ ६८ ॥ यथाबालस्यसर्पस्य
उच्छ्वासोलघुचेतसः ॥ एवमूष्माप्रयोक्तव्याहकारपरिवर्जितः ॥६९॥
विवृतिंप्रत्ययादूष्मांप्रवदंतिमनीषिणः ॥ तामेवप्रतिषेधंतिआईऊए

निदर्शनम् ॥७०॥ अष्टौस्वरान्प्रवक्ष्यामितेषामेवतुलक्षणम् ॥ जात्योऽ
भिनिहितःक्षैप्रःप्रश्लिष्टश्चतथापरः ॥७१॥ तैरोव्यञ्जनसंञ्ज्ञश्च तथा तै
रोविरामकः॥पापवृत्तोभवेत्तद्वत्तथाभाव्यइतिस्वराः ॥७२॥एकपदेनी
चपूर्वःसयवोजात्यइष्यते।अपूर्वोऽपिपरस्तद्वद्धान्यंकन्यास्वरित्यपि॥
एकपदइत्याह ॥ नीचपूर्वःसयकारवकारौवाजात्यःस्वरितोभवति ॥
यथाजात्यंमनुष्यानिति।सुप्वेति।चम्वीव।धान्यम् । कन्याइव।स्वः ।
वीर्यं । एवं ह्याहयानिचान्यानीदृग्लक्षणानिपदानिभवंति । एओआभ्या
मुदात्ताभ्यामकारोरिफितश्चयः॥अकारोयत्रलुप्येततंचाभिनिहितंवि
दुः॥७३॥यथा कुक्कुटः+असि। कुक्कुटोसि । वेदः+असि। वेदोसि। भागः

असि+भगोसि । मारुतः+असि । मारुतोसि । श्वात्रः+असि । श्वात्रो सि।ते+अप्सरसाम् । तेप्सरसाम्।ते+अवंतु । तेवंतु।कः+असि।कोसि। सः+अहम् । सोहम् । एवठंव्याहृयानिचान्यानिईदृग्लक्षणानिपदानि भवंति । इउवर्णौयदोदात्तावापद्येतेयवौक्वचित् ॥ अनुदात्तेपदेनित्यंविं द्यात्क्षैप्रस्यलक्षणम्॥७४॥यथा त्रि+अंबकम् । त्र्यंबकम् । द्रु+अन्नः । द्र्वन्नः । वीडु+अंगः । वीड्वंगः । वाजी+अर्वन् । वाज्यर्वन् । एवठंव्याहृया नि० ॥ इकारोयत्रदृश्येतइकारेणैवसंयुतः॥उदात्तश्चानुदात्तेनप्राश्लिष्टो भवतिस्वरः॥७५॥ अभि+इन्धताम् । अभीन्धताम् । अभि+इमम् ।

अभीमम् । वि+इहि । वीहि । स्रुचि+इव । स्रुचीव । चम्वी+इव । चम्वीवेति । एवंह्याहयानिचान्यानि ०॥उदात्तपूर्वंयत्किंचिच्छंदसिस्वरितंपदम्॥एषसर्वबहुस्वारस्तैरोव्यंजनउच्यते॥७६॥ इडे । रंते । हव्ये । काम्ये । चंद्रे । ज्योते । अदिति । सरस्वता । महि । विश्रुतीतिभवंति । एवंह्याहयानि॰ भवंति ॥ अवग्रहात्परोयस्तुस्वरितःस्यादनंतरम् ॥ तैरोविरामंतंविद्यादुदात्तोयद्यवग्रहः ॥ ७७ ॥ यथागोमदितिगो+मत् । गोपतावितिगो+पतौ । प्रप्रेतिप्र+प्र । विततेतिवि+तता । समिद्धेतिसम् +इद्धः । एवंह्याहयानि॰ भवंति ॥ स्वरेति



स्वरितेचैवविवृतिर्यत्रदृश्यते ॥ पादवृत्तोभवेत्स्वारःश्वित्रआदित्येति
निदर्शनम् ॥ श्वित्रः+आदित्यानाम् ॥ श्वित्र आदित्यानाम् । पु
त्रः+ईधे । पुत्रईधे । दात्रे+एधि । दात्रएधि । कः+ईम् कईम् । ताः+
अस्य । ताअस्य । एवंह्याहयानि० ॥ उदात्ताक्षरयोर्मध्येभवेन्नीच
स्त्ववग्रहः ॥ तथाभाव्यंभवेत्कंपस्तनूनप्त्रेतिनिदर्शनम् ॥ ७८ ॥
यथातनूनप्त्रइति तनू+नप्त्रे । तनूनपादिति तनू+नपात् । तनूनपात
मिति तनू नपातम् । एवंह्याहयानिपदानिलक्षणानिभवंति ॥ इत्य
ष्टपदसमाम्नायेवैशेषिकेयाज्ञवल्क्यवचनानांपदानांपाठःसमाप्तः ॥



माध्यंदिनविरोधिःस्यात्तथाभाव्यस्तुयःस्मृतः ॥ स्वरोनैवात्रदृश्ये ताभिन्नोदात्तानुदात्तकौ ॥ १ ॥ स्वराःस्पर्शाताःस्थोष्माणः ॥ कण्ठ्य-जिह्वामूलीय-तालव्य-मूर्धन्य-दंत्य-ओष्ठ्य-यम-विसर्जनीयनि पाताद्याश्चकिंवर्णदैवत्यलिंगाः । स्मराः शुक्लाः नानादैवत्याः । स्प र्शाः कृष्णाः । कपिलाअंतस्थाः । ऊष्माणोऽरुणाः । नीलायमाः । ह रितानासिक्याः । पीतोनुस्वारः । रक्तोजिह्वामूलीयः । पीतउपध्मा नीयः । श्वेतोविसर्जनीयः । शबलोरंगः । नीलोनुनासिक्यः । इत्यंत मध्यमयोर्नासिक्यंविद्यात् ॥ द्विरुदात्ताख्याइतिस्मृतः । उदमनुद

निपातेआद्येचोपसर्गैनामाख्यातेचोपसर्गनिपाताश्चेति । किंदैवत्या
अक्षराणांचकेपुरुषाः । काःस्त्रियः । कानिनपुंसकानिइत्यत्रब्रूमः ।
कंठ्याआग्नेयाः । अकारादयः । जिह्वामूलीयानैर्ऋत्याःककाराद
यः । तालव्याः सौम्याश्चचकारादयः । वायव्यामूर्धन्याष्टकाराद
यः । रौद्रादंत्यास्तकारादयः । औष्ठ्याआश्विन्याः पकारादयः ।
शेषावैश्वदेवाः । अंइत्येवमादयः ॥ स्वरास्तुब्राह्मणाज्ञेयावर्गाणांप्र
थमाश्चये ॥ द्वितीयाश्चतृतीयाश्चचतुर्थाश्चापिभूमिपाः ॥ २ ॥ वर्गा
णांपंचमावैश्याअंतस्थाश्चतथैवच ॥ ऊष्माणश्चहकारश्चशूद्राएवप्र

कीर्तिताः ॥ ३ ॥ शुक्लवर्णानिनामानिआख्यातारोहितामताः ॥ क
पिंजलास्तूपसर्गाःकृष्णाश्चैवनिपातकाः ॥ ४ ॥ भार्गवगोत्राणिना
मानिभारद्वाजाआख्याताः ॥ वासिष्ठाउपसर्गास्तुनिपाताःकाश्य
पाःस्मृताः ॥ पीतवर्णश्चोपसर्गानिपातःकृष्णवर्णकः ॥ सर्वंतुसौम्य
माख्यातंवायव्यंनामदृश्यते ॥ आग्नेयस्तूपसर्गःस्यान्निपातोवारुणः
स्मृतः ॥ ५ ॥ प्रथमाश्चतथांतस्थाःस्त्रीलिंगाःपरिकीर्तिताः ॥ शेषा
क्षराणिषंढानिप्राहुर्लिंगविवेचकाः ॥ ६ ॥ नाम्नामिंद्रोदेवताव
रुणउपसर्गाणामादित्यःसर्वस्याक्षरगणस्यस्वराविसर्जनीयोयमाश्चपुं

ल्लिंगाः । ङञणनमायरलवाः स्त्रीलिंगाः । शेषाण्यक्षराणिनपुंसकल्लिं
गानीति ॥ संधिश्चतुर्विधोभवतीति ॥ लोपागमौवर्णविकारः प्रकृति
भावश्चेति । तद्यथा तत्रलोपोभवति अयक्ष्माः+मा अयक्ष्मामा । श
ततेजाः+वायुः शततेजावायुः । तिग्मतेजाः+द्विषतः । तिग्मतेजाद्वि
षतः । इतिलोपः॥आगमोभवति यथा प्रत्यङ्+सोमः प्रत्यक्सोमः।
प्राक्सोमःप्राङ्+सोमः।अस्मान्+सीतेअस्मान्त्सीते।त्रीन्+समुद्रान्
त्रीन्त्समुद्रान्। इतिआगमः॥विकारोभवति आ+इदम् एदम्। आ+इ
मे एमे । आ+इष्टयःएष्टयः।प्र+इषितः प्रेषितः। इतिविकारः॥प्रकृति

भावः यथा आशुः शिशानः । युञ्जानःप्रथमम् । अदितिःषोडशाक्षरेण । देवोवःसविता । इतिप्रकृतिभावः ॥ आकाशस्थायथाविद्युत्स्फुटितामणिसूत्रवत् ॥ एषच्छेदोविवृत्तीनांयथाबालेषुकर्तरी ॥ ७ ॥ द्वयोस्तु स्वरयोर्मध्येसंधिर्यत्रनदृश्यते ॥ विवृत्तिस्तत्रविज्ञेयायईशेतिनिदर्शनम् ॥ ८ ॥ पिपीलिकापाकवतीतथावत्सानुसारिणी ॥ वत्सानुसंसृताचैवचतस्रस्तुविवृत्तयः ॥ ९ ॥ पंचरंगाःप्रवर्तंतेघातानिर्घातवज्रिणः ॥ अहरप्रहरोज्ञेयअइउऋओइतिनिदर्शनम् ॥ १० ॥ पिपीलिकाआद्यंतदीर्घानाभ्याआसीदितिनिदर्शनम् ॥ पाकवत्युभयोर्ह्रस्वा

विनइन्द्रेतिनिदर्शनम् ॥ ११ ॥ अन्तेचवत्सानुसृजतातानेत्यसौआ
वोढमाश्विनेतिनि०॥वत्सानुसारिणीचादौदीर्घाताअस्येतिनि०॥१२॥
करिणीकुर्विणीचैवहरिणीहारिणीतिच ॥ तथाहंसपदानामपंचैताःस्व
रभक्तयः ॥ १३ ॥ करिणीरहयोर्योगेकुर्विणीलहकारयोः ॥ हरिणीर
षयोर्योगेहारितांऋषकारयोः ॥ १४ ॥ यातुहंसपदानामसातुरेफष
कारयोः ॥ हरिणीहरयोर्विद्यात्कुर्विणीलहकारयोः ॥ १५ ॥ देवंबर्हि
रितिकरिणीउपह्वरेतिकुर्विणी ॥ हरिणीअरेषसइत्याहुर्हारिणीशत
वल्हेतिच ॥ १६ ॥ वर्षावर्षीयतेसीतितथाहंसपदेतिच ॥ स्वरभक्ति

प्रयुंजानस्त्रीन्दोषान्परिवर्जयेत् ॥ १७ ॥ इकारंचाप्युकारंचग्रस्तदो
पंतथैवच ॥ एतल्लक्षणमाख्यातंयाज्ञवल्क्येनधीमता ॥ १८ ॥ सम्य
क्पाठस्यसिद्ध्यर्थंशिष्याणांहितकाम्यया ॥ अर्धमात्रास्वरंकिंचि
त्पृथङ्न्यूनमिवोच्चरन् ॥ ऋकारेतुहकारस्यहृत्कंठमनसापिच॥१९॥
नैतत्स्वरितपूर्वांगेनापरांगेकथंचन ॥ नस्वरेनचमात्रायांकथंस्वारोवि
धीयते ॥ २० ॥ परांगस्यतुयत्पूर्वंपूर्वांगस्यतुयत्परम् ॥ उभयाद्धोर्द्ध
संयोगेस्वारंकुर्याद्विचक्षणः ॥ २१ ॥ संयोगेतुपरंस्वार्थंपरंसंयोगना
यकम् ॥ संयुक्तस्यतुवर्णस्यनस्वार्थंपूर्वमक्षरम् ॥ २२ ॥ उदात्ताद

नुदात्तेतुवामायाभ्रुवआरभेत् ॥ उदात्तात्स्वरितोदात्तौक्रमाद्दक्षिणतो
न्यसेत् ॥ २३ ॥ स्वरितादनुदात्तायेप्रचयांस्तान्प्रचक्षते ॥ एकस्व
रानपिचतानाहुस्तत्त्वार्थचिंतकाः ॥ २४ ॥ प्रचयोयत्रदृश्येतत्रह
न्यात्स्वरंबुधः ॥ स्वरितःकेवलोयत्रमृदुस्तत्रनिपातयेत् ॥ २५ ॥ दु
र्बलस्ययथाराष्ट्रंहरतेबलवान्नृपः ॥ एवंव्यंजनमासाद्यअकारोहरते
स्वरम् ॥ २६ ॥ उच्चादुच्चतरंनास्तिनीचान्नीचतरंतथा ॥ अक्षरातु
ल्ययोगाच्चनीचेनीचगतानिच ॥ २७ ॥ स्वरउच्चःस्वरोनीचःस्वरः
स्वरितएवच ॥ स्वरप्रधानैस्तैःस्वार्यंव्यंजनंतेनसस्वरम् ॥२८॥ व्यंज

नान्यनुवर्ततेयत्रातिष्ठतिसस्वरः ॥ स्वरप्रधानंत्रैस्वर्यंआचार्याःप्रवदं
तिहि ॥२९॥ मणिवद्व्यंजनंविद्यात्सूत्रवच्चस्वरंविदुः॥ आचार्याःसम
मिच्छंतिपदच्छेदंतुपंडिताः ॥३०॥ स्त्रियोमधुरमिच्छंतिविकुष्टमित
रेजनाः ॥ उदात्तंनानुवर्ततेनीचंनस्वरितंतथा ॥३१॥ विस्वरंतंविजा
नीयाद्दीर्घह्रस्वविवर्जितम्॥हरिवरुणवरेण्येषुधाराहिपुरुषेषुच ॥ वैश्वा
नरोनकारे च शेषास्तु स्वरितानराः ॥ स्वरितेरेफवैश्वानरोनकारःशे
षाकारःस्वरितानराः ॥ ३२ ॥ द्वौवरुणौचस्वरितौउदुत्तमंत्वंवरुण ॥
धारेचैवोरुधारेतुपुरुधारेचदोहने ॥ मात्रिकंवाद्विमात्रंवास्वरितंयदि

हाक्षरम् ॥ तस्यादितोर्द्धमात्रावैशेषंचपरतोभवेत् ॥३३॥ नकारांतेपदे
पूर्वेस्मश्रुभिःपरतःस्थिते॥ छकारंनप्रयुंजीतनशसंधिंसमुच्चरेत्॥३४॥
ओकारंप्लुतंविज्ञेयंप्लुतमस्माद्द्वितीयकम् ॥ लाजींछाचीतृतीयंचविवेशे
तिचतुर्थकम् ॥ ३५ ॥ अधःस्विदासीत्पंचमंचोपरिस्विदासीच्चषष्ठक
म् ॥ सप्तमंतुश्रुवोस्मारअष्टमंनैवविद्यते ॥ ऌकारस्यतुदीर्घत्वंनास्ति
वाजसनेयिनः॥३६॥ उच्चस्थानगतेह्रस्तेस्वरितंनोपपद्यते ॥ अधस्ता
त्तुयदागच्छेत्स्वरितंनतदाभवेत् ॥ कचटतपाहश्यंतेसंधिस्थानेषुनि
त्यशः ॥ स्ववर्गेणैवसंयुक्तामोक्षंकुर्वीतत्तत्रवै ॥ तकारांतेपदेपूर्वेसका

रेपरतःस्थिते ॥ प्रत्यारंभंनकुर्वीतपापावितिनिदर्शनम् ॥ ककारांतेप
देपूर्वेसकारेपरतःस्थिते ॥ खसवर्णविजानीयाद्भिखक्सेतिनिदर्शन
म् ॥ तकारांतेपदेपूर्वेचवर्गेपरतःस्थिते ॥ मोक्षंतत्रचकुर्वीतयच्चपापौ
निदर्शनम् ॥ ङकारांतेपदेपूर्वेसकारेपरतः स्थिते ॥ कसवर्णविजानीया
त्प्राङ्सोमेतिनिदर्शनम् ॥ टकरांतेपदेपूर्वेसकारेपरतःस्थिते ॥ टसव
र्णविजानीयात्संम्राट्संभृतेतिनिदर्शनम् ॥ तकारांतेपदेपूर्वेसकारेपर
तःस्थिते ॥ छसवर्णविजानीयात्तत्सवितुरितिनिदर्शनम् ॥ नकारां
तेपदेपूर्वेसकारेपरतःस्थिते ॥ तसवर्णविजानीयात्रीन्त्समुद्रेतिनिदर्श

नम् ॥ पकारांतेपदेपूर्वेंशकारेपरतःस्थिते ॥ छासवर्णंविजानीयादनुष्टु
प्छारदीतिनिदर्शनम्॥ मकारांतेपदेपूर्वेंसवर्णेंपरतःस्थिते॥ मसवर्णंवि
जानीयादिमम्मेतिनिदर्शनम्॥वर्णेतुमात्रिकेपूर्वेंअनुस्वारोद्धिमात्रिकः
द्धिमात्रेमात्रिकोज्ञेयःसंयोगाद्यस्ययोभवेत्॥ अनुस्वारोद्धिमात्रः स्या
दवर्णव्यंजनादिगः॥ह्रस्वाद्धायादिवादीर्घाद्देवानां७ह्रदयेभ्यइति ॥ अ
नुस्वारस्योपरिष्टात्संवृतंयत्रदृश्यते। दीर्घंतंतुविजानीयाच्छ्रोताग्रावा
णेतिनिदर्शनम् ॥ अनुस्वारस्योपरिष्टात्संयोगोयत्रदृश्यते ॥ ह्रस्वंतंतु
विजानीयात्सठंस्थेतिनिदर्शनम् ॥ अनुस्वारश्चयोदीर्घादक्षराद्योभवे

तपरः॥सतुह्रस्वइतिज्ञेयोमंत्रेष्वेवविभाषया ॥ ओभावश्चाविवृत्तिश्चशष
सारेफएवच ॥ जिह्वामूलमुपध्माचगतिरष्टविधोष्मणः ॥ यद्योभावप्र
संधानमुकारादिपरंपदम् ।स्वरांतंतादृशंविद्याद्यदन्यद्व्यक्तमूष्मणः॥
उभावादुत्थितश्चोष्मातांतुकेलिंविनिर्दिशेत् ॥ विवृत्तंप्रातियाऊष्मावि
ज्ञेयाविकटानना ॥ लीढातिलीढविद्युच्चशषसेषुप्रकीर्तिता: ॥ जिह्वामू
लेचरेफेचविज्ञेयाविठकाशठा ॥ उपध्मानीयसहितांपुष्पिणींतांविनि
र्दिशेत्॥अन्यत्रयोभवेदूष्मासुलभांतांविनिर्दिशेत्॥ पादाद्यंतंपदाद्यंतं
तथावग्रहकालिकम् ॥ ईषत्स्पृष्टंविजानीयात्तस्मिन्कालेतुकारयेत् ॥

पादादौचपदादौचसंयोगावग्रहेषुच ॥ जःशब्दइतिविज्ञेयोयोन्यःसय
इतिस्मृतः ॥ उपसर्गपरोयस्तुपदादिरपिदृश्यते ॥ ईषत्स्पृष्टंयथावि
द्युत्पदच्छेदात्परंभवेत् ॥ त्वदर्थवाचिनौवोवांवावेयादिनिपातजौ॥आ
देशश्चविकल्पार्थाईषत्स्पृष्टाइतिस्मृताः ॥ विभाषयायेकारःस्यात्तथा
नेतिपदात्परः॥भवतीत्यपिपूर्ववत्तथाचसपदादपि ॥ यदेवलक्षणंयस्य
वकारस्यापितद्भवेत् ॥ यत्रयत्राविशेषःस्यादिदानींससकथ्यते ॥
वकारस्त्रिविधःप्रोक्तोगुरुर्लघुर्लघूतरः ॥ आदौगुरुर्लघुर्मध्येपदांतेचल
घूतरः ॥ यवर्णास्त्रिविधःप्रोक्तोगुरुर्लघुर्लघूतरः ॥ आदौगुरुर्लघुर्मध्ये

पदांतेतुलघूतरः ॥ उपांशुस्वरितंचैवयोधीतेवित्रसन्नपि ॥ अपिरूपस
हस्राणांसंदेहेषुप्रवर्तते॥पंचविद्यांनगृह्णंतिजडास्तब्धाश्चयेनराः ॥अल
साश्चैवरोगाश्चयेषांचाविस्मृतंमनः ॥ अहेरिवगणाद्भीतःसंमानान्नर
कादिव ॥ राक्षसीभ्यइवस्त्रीभ्यःसविद्यामधिगच्छति ॥ नभोजनवि
लंबीस्यान्नचनारीनिवंधनः ॥ सुदूरमपिविद्यार्थीव्रजेद्गरुडहंसवत् ॥
यथाखनन्खनित्रैणनरोवार्यधिगच्छति ॥ तथागुरुगतांविद्यांशुश्रूषुर
धिगच्छति ॥ सुखार्थीचेत्त्यजेद्विद्यांविद्यार्थीचेत्त्यजेत्सुखम् ॥ सुखि
नश्चकुतोविद्यासुखंविद्यार्थिनःकुतः॥ गुणिताशतशोविद्यासहस्रावर्ति

तापुनः॥ आगमिष्यातिजिह्वाग्रेस्थलान्निम्नमिवोदकम् ॥ शतेनगुणिता
विद्यासहस्रेणचतिष्ठति॥शतानांचसहस्रेणप्रत्यंचदवतिष्ठति ॥ जलम
भ्यासयोगेनशिलायांकुरुतेक्षयम् ॥ कर्कशानांमृदुस्पर्शकिमभ्यासा
न्नसाध्यते ॥ गुरुशुश्रूषयाविद्यापुष्कलेनधनेनवा ॥ अथवाविद्ययावि
द्याचतुर्थनोपलभ्यते ॥ शुश्रूषारहिताविद्याह्यल्पमेधागुणैः सह ॥
वंध्याचयौवनीतस्यानविद्याफलिनीभवेत् ॥ हयानामिवजात्यानाम
र्धमात्रार्द्धशायिनाम् ॥ नहिविद्यार्थिनांनिद्राचिरंनेत्रेषुतिष्ठति ॥
यथा पिपीलिकैःपांसुर्वल्मीकंक्रियतेमहत् ॥ नतत्रबलसामर्थ्यमुद्य

मस्तत्रकारणम् ॥ अंजनस्यक्षयंदृष्ट्वावल्मीकस्यतुसंचयम् ॥ अवं
ध्यंदिवसंकुर्याद्दानाध्ययनकर्मसु ॥ अन्नव्यंजनयोर्भागौतृतीयमुद
कस्यच ॥ वायोःसंचारणार्थायचतुर्थमुपकल्पयेत् ॥ हकारंपंचमैर्यु
क्तमंतस्थैश्चापिसंयुतम् ॥ औरसंतंविजानीयात्कंठ्यमाहुरसंयुतम् ॥
हकारोयत्रपूर्वस्थोअन्तस्थाद्योभवेत्परः ॥ पदकालेवियुज्येतसंहिता
यांसऔरसः ॥ मेघदुंदुभिनिर्घोषोज्ञायतेपयसोहृदात् ॥ एवंनादंप्रयो
क्तव्यंसिंहस्यरुदितंयथा ॥ मासेभाद्रपदेमेघाःशब्दंकुर्वंतियादृशम् ॥
एवंगह्वरमासाद्यशुक्रंदुदुक्तेतिदर्शनम् ॥ शेषाणांवानरायुद्धमुत्पतंति

पतंतिच ॥ एवंवर्णाःप्रयोक्तव्याइहेहैषान्निदर्शनम् ॥ यथापुत्रवतीस्ने
हात्स्नुवतेनिजमौरसम् ॥ एवंवर्णाःप्रयोक्तव्यायुञ्जानेतिनिदर्शनम् ॥
दर्दुरोदरदेशौतुप्रफुल्लेतेपुनर्यथा ॥ एवंवर्णाःप्रयोक्तव्याअपांफेनेति
निदर्शनम् ॥ यथाभारभराक्रांतानिश्वसंतिनराभुवि ॥ एवंवर्णाःप्र
योक्तव्या अब्धःसंभृतइत्यपि ॥ कुक्कुटःकामलुब्धश्चककारद्वयमुच्चरे
त् ॥ एवंवर्णाःप्रयोक्तव्याःकुक्कुटोसीतिदर्शनम् ॥ वडवाचहयंदृष्ट्वा
योनिंविकुरुतेयथा॥ एवंवर्णाःप्रयोक्तव्याःसदुंदुभेतिनिदर्शनम् ॥ रंगे
चैवसमुत्पन्नेनोग्रसेत्पूर्वमक्षरम् ॥ स्वरंदीर्घंप्रयुंजीतपश्चान्नासिक्य

माचरेत् ॥ यथासौराष्ट्रिकानारीअराँइत्यभिभाषते ॥ एवंरंगःप्रवक्त
व्योङ्कारःपरिवर्जितः ॥ द्विमात्रिकोमात्रिकोवानासामूलंसमाश्रि
तः ॥ अंतेप्रयुंजतेरंगः पंचमैः सानुनासिकः ॥ यथासौराष्ट्रिकानारी
अराँइत्यभिभाषते ॥ एवंरंगंविजानीयान्ङ्कारपरिवर्जितम् ॥
अनंतरंमकारस्ययोरंगस्तत्ररंज्यते ॥ सर्वानुनासिकंविद्यादेषाव
ध्योपधानिका ॥ यरलवशषसहरज्यतेचोपधानिका ॥ गवांतेरंग
तेयस्तुसर्वैःसर्वानुनासिका ॥ नासादुत्पद्यतेरंगःकांस्येनसमानिःस्व
नः ॥ मृदुश्चैवद्विमात्रःस्याद्दृष्टिमान्स्यान्निदर्शनम्॥यथाव्याघ्रीहरेत्पु

त्रान्दंष्ट्राभिर्नचपीडयेत् ॥ भीतापतनभेदाभ्यांतद्वर्णान्प्रयोजयेत्॥
मधुरंचनचाव्यक्तंव्यक्तंचापिनपीडितम् ॥ सनाथस्यैकदेशस्यनवर्णाः
संकरंगताः ॥ यथासुमत्तनागेंद्रःपदात्पदंनिधापयेत्॥ एवंपदंपदाद्यंतं
दर्शनीयंपृथक्पृथक्॥गीतीशीघ्रीशिरःकंपीयथालिखितपाठकः ॥अन
र्थज्ञोल्पकंठश्चषडेतेपाठकाधमाः ॥ माधुर्यमक्षरव्यक्तिःपदच्छेदस्तुसु
स्वरः ॥ धैर्यंलयसमत्वंचषडेतेपाठकागुणाः॥चतुरक्षरषट्कंचानिवर्ततेपु
नःपुनः॥आवर्ततेपदंयच्चाद्विस्त्रिराम्रेडितंहितत् ॥ यथाधाम्नेधाम्नेतिय
जुषेयजुषेतिनिदर्शनम्॥हीयतेवर्धतेचापिपदंयत्रकृशोदरम् ।उपचारः

सविज्ञेयउभेसुश्चंद्रेतिनिदर्शनम् ॥ ॥ अथसप्तविधाःसंयोगपिंडाः ॥
अयःपिंडोदारुपिंडऊर्णापिंडोज्वालापिंडोमृत्पिंडोवायुपिंडोवज्रपिंड
श्चेति ॥ यमान्विद्यादयःपिंडान्सांतस्थंदारुपिंडवत् ॥ अंतस्थंयमवर्जं
तुऊर्णापिंडंविनिर्दिशेत् ॥१॥ अंतस्थंयमसंयोगेविशेषोनोपलभ्यते ॥
अशरीरंयमंविद्यादंतस्थंपिंडनायकम् ॥२॥ज्वालापिंडान्सनासिक्या
न्सानुस्वारांस्तुमृन्मयान् ॥ सोपध्मावायुपिंडाश्चजिह्वामूलेतुवज्रिणः
॥३॥ अयःपिंडोनामयथा । अग्नीः । पत्नीः । नातनाच्म । दारुपिंडो
नामयथा । अश्वः । सूर्यः । विभ्राजतीतिभवति । तत्रऊर्णापिंडोनाम

यथा। अस्मिन् । यस्मिन् । अमुष्मिन्।इतिभवति ॥ तत्रज्वालापिंडो नामयथा। ब्रह्मावाह्नः।गृह्णामीतिभवति। तत्रमृत्पिडोनामयथा। सॐ स्थाम्। सॐस्कर्त्तारः।सॐस्वर्तइति। तत्रवायुपिंडोनामयथा। देवस वितः।युञ्जानःप्रथमम्। प्रादिवःककुत्सुतामितिभवति ॥ तत्रवज्रापिंडो नामयथा। इष्कृतिःनिष्कृतिः ऋक्सामयोः। इतिभवति ॥ प्रथममे वषकारेण सकारेणैवसंयुतम् ॥ एतत्स्वरंसमासाद्यअग्निष्वात्तानिद र्शनम् ॥४॥ प्रथमेनठकारेणथकारेणैवसंयुतम् ॥ एतत्स्वरंसमासाद्य अधिष्ठानानिदर्शनम् ॥५॥ प्रथममेवणकारेणनकारेणैवसंयुतम्॥ एत

त्स्वरंसमासाद्यात्रिणवत्रयस्त्रिंशाविंतिनिदर्शनम् ॥ ६ ॥ प्रथममेव
रंगेणनकारेणैवसंयुतम् ॥ एतद्राअितमासाद्यवृष्टिमानितिनिदर्शनम्
॥७॥ एतेककाराद्योमकारपर्यवसानाःकृष्णाव्याख्याताः । शनैश्वर
दैवत्य ःस्थायरलवाःकपिलवर्णाःअग्निदैवत्याः । चत्वारू
ष्माणःशषसहा अरुणवर्णाः आदित्यदैवत्याः॥त्रयस्त्रिंशद्व्यंजनानि
स्पर्शाअंतस्थाऊष्माणश्चेति । चतुर्विधंकरणम् ॥ स्पृष्टमस्पृष्टंसंवृतं
विवृतंचेति ॥ संवृताघोषाविवृताअघोषाः । विंशतिर्घोषास्तेगजड
दबाघझढधभाङञणनमाःयरलवाश्चेति । त्रयोदशअघोषास्तेकचट

तपाःखछठथफाःशषसाश्चेति ॥ षड्विधमास्यप्रयत्नम् ॥ संवृतंविवृतम
स्पृष्टंस्पृष्टमीषत्स्पृष्टंचार्धस्पृष्टंचेति ॥ तत्रअकारःसंवृतोज्ञेयइतरेवि
वृताःस्वराः ॥ सर्वैंचतेस्युरस्पृष्टाःस्पर्शाः स्पृष्टाभवन्तिहि ॥ ८ ॥
ईषत्स्पृष्टास्तथान्तस्थाऊष्माणार्धस्पृशःस्वराः ॥ सामान्यंभजतेवर्णः
संस्थानकरणस्यहि ॥ ९ ॥ ऋलोर्मध्येभवत्यर्धमात्रारेफलकारयोः ॥
तस्मादस्पृष्टतानस्याहल्लकारनिरूपणे ॥ १० ॥ वर्गाणांप्रथमाद्वितीयाः
शषसहाश्चाघोषाघोषास्त्वन्येदशधावर्णाभवन्ति ॥ अष्टौवर्णस्थानानि
भवंति। उरःकंठ्यमूर्धन्यतालुदंत्योजिह्वामूलयमानुनासिक्याश्चेति॥

द्वौऔरस्यौ हव ह्यइति । अआआ ३ अवर्णहकारविसर्जनीया इति त्रयःकंठ्याः । ऋषट्मूर्द्धन्याः टठडढणष इति । दशतालव्याः चछजझञयशइईई ३ इति । अष्टौदंत्याः तथदधनऌलसाः । अष्टावोष्ठ्याः पफबभमाउऊऊ ३ वउपध्माचेत्यादयः । एकोदंतमूलीयोरेफः । जिह्वामूलीयाःपंच कुंखुंगुंघुंङुंइति । क्मख्मग्मघ्मकुंखुंगुंघुंइतियमाश्चत्वारः ॥ रुक्मेति प्रथमोज्ञेयः सक्थ्येत्येवापरोभवेत् । तृतीयःसध्नइत्याहुःउपध्मेतिचतुर्थकः ॥ ११ ॥ प्रथमौचौष्ठनासिक्यौद्वितीयःकंठ्यदंत्यश्चनासामूलमुपाश्रितः ॥ तृतीयःकंठ्यजिह्वा

ग्रेनासायामेवनिर्दिशेत् ॥ चतुर्थौहृदिनासिक्यःकंठेचाभिहितायमाः
॥ १२ ॥ आपंचमैश्चैकपादःसंयुक्तंपंचमाक्षरम् ॥ उत्पद्यतेयमस्तत्र
सोऽङ्गपूर्वाक्षरस्याहि ॥ १३ ॥ पंचमाःशषसैर्युक्ताअन्तस्थैर्वापिसंयु
ताः ॥ यमास्तत्रनिवर्तंतेश्मशानादिवबांधवाः ॥ १४ ॥ ऋवर्णेतिपरे
सादावनुस्वारोद्विमात्रकः ॥ संयोगेपरभूतेतुह्रस्वएवोच्यतेबुधैः ॥
॥ १५ ॥ आद्यामात्रातुकण्ठयस्यएकारौकारयोर्भवेत् ॥ तालव्यस्य
तथौष्ठयस्यद्वितीयाचयथाक्रमम् ॥ १६ ॥ यादृशीरत्नवर्णाभाजपा
याःकुसुमेऽथवा ॥ तादृशंरञ्जयेद्वर्णंप्रान्तेनासिक्यमाचरेत् ॥ १७ ॥

लाक्षारक्तंयथातोयंनकारान्तंपदंतथा ॥ सर्वरंगंविजानीयाच्छत्रूनि
तिनिदर्शनम् ॥ १८ ॥ लुप्तेनकारेयत्स्वारंरंजन्तिशौनकादयः ॥ आ
दिरैङ्गंविजानीयान्नचासीदिवविन्दन्ति ॥ १९ ॥ प्रथमस्थपकारेण
तकारेणचसंयुतम् ॥ एतदक्षरमासाद्यत्रिष्टुभेतिनिदर्शनम् ॥ २० ॥
प्रथमस्थषकारेणथकारेणचसंयुतम् ॥ एतत्स्वरंसमासाद्याधिष्ठान
मितिनिदर्शनम् ॥ २१ ॥ चतुर्थंचतृतीयेनाद्वितीयंप्रथमेनच ॥ आद्यं
मध्यंतथान्यश्चस्वरूपेणाभिपीडयेत् ॥ २२ ॥ अवग्रहपदच्छेदउदात्तं
दृश्यतेयदि ॥ स्वरन्तंस्वरितंप्राहुःसंधौतुस्वार्यतेपरम् ॥ २३ ॥ स्वर

संधिविधाननीचोच्चंतुविधीयते ॥ व्यंजनाद्वास्वराद्वापितत्सन्धौ स्वरउच्यते ॥ २४ ॥ उदात्तान्निहितःस्वारःस्वरितात्प्रचयोभवेत् ॥ उदात्तात्स्वरितात्पूर्वोनान्यआपद्यतेस्वरः ॥ २५ ॥ पदकालेयःस्वरितःसंहितायांतथैवच ॥ स्वरिताच्चेद्भवेत्पश्चात्सएवनिचितःस्वरः ॥ ॥ २६ ॥ प्रथमाश्चतृतीयाःस्युपरेघोषवतिस्थिते ॥ पञ्चमाःपञ्चमे पाठेद्वितीयाःशषसेषुच ॥ २७ ॥ उदात्तान्निहितःस्वार्यःस्वारोदात्तौ नतत्परौ ॥ स्वरितोनस्तथाभूतोज्ञेयःसप्रचयःसदा ॥ २८ ॥ उच्चानुदात्तयोर्योगेस्वरितःस्वारउच्यते ॥ ऐक्यंतत्प्रचयःप्रोक्तःसन्धिरेषां

मिथोऽद्भुतः ॥ २९ ॥ वह्नीजिह्वायथागृह्णात्यह्नोवह्निस्तथैवच ॥ ब्रह्म रूपं विजानीयाद्गुरुमेवात्मनःसदा ॥ ३० ॥ यत्किंचिद्वाङ्मयंलोके:: र्वमत्रप्रतिष्ठितम् ॥ करोतितत्प्रदानंयत्तस्माद्ब्रह्ममयोगुरुः ॥ ३१ ॥ विधिनाप्यविधिनाज्ञानमविधानान्नलभ्यते ॥ अविधानपरोनित्यंप्रा यश्चित्तीभवेन्नरः ॥ ३२ ॥ युक्तियुक्तंवचोग्राह्यंनग्राह्यंगुरुगौरवात् ॥ सर्वशास्त्ररहस्यंतद्याज्ञवल्क्येनभाषितम् ॥ ३३ ॥ ऋवर्णेतितत्परे सादावनुस्वारोद्विमात्रकः । संयोगपरभूतेतुह्रस्वएवोच्यतेबुधैः ॥

॥ इति श्रीयाज्ञवल्क्यशिक्षासमाप्ता ॥ ॥ ॥ ॥

श्रीगणेशाय नमः ॥ ॥ ॐ अथानुवाकान्वक्ष्यामिब्रह्मणानिर्मितान्पु
रा ॥ शिष्याणामुपदेशाययज्ञसंस्कारएवच ॥ विप्राणांयज्ञकालेषु
जपहोमार्चनादिषु ॥ ९ ॥ ईषेत्वैकावसोःपवित्रंतिस्रोग्नेव्रतपतेसप्तप
वित्रेस्थोद्वेशर्मासि तिस्रोधृष्टिरसिशर्मासिद्विकौदेवस्यत्वातिस्रोदेव
स्यत्वापंचप्रत्युष्टंरक्षास्तिस्रोदशैकत्रिंशत् ॥ १० ॥ ३१ ॥ १ ॥
कृष्णोसिपडग्नेवाजजित्तिस्रोमयीदमग्नीषोमयोःपंचकावग्नेदब्धायो
तस्वःसंवर्चसापंचाग्नयेकव्यवाहनायषट्सप्तचतुस्त्रिंशत् ॥ ७ ॥
॥ ३४ ॥ २ ॥ समिधाग्निंभूर्भुवःस्वश्चतुष्कावाग्निर्ज्योतिर्द्वेउपप्रयंतः

षड्विंशतिर्भूर्भुवःस्वश्चतस्रोगृहामातिस्रःप्रघासिनःपंच पूर्णादर्विद्वे
ऽअक्षन्नमीमदन्तषडेषतेसप्तदशात्रिषष्टिः ॥ १० ॥६३ ॥ ३ ॥ एदंद्वेम
हीनांपयश्चतस्रआकूत्याऋक्सामयोर्द्वेकौव्रतंकृणुतषडेषातेचतस्रोव
स्व्यासितिस्रएषतेद्वेशुक्रंत्वाचतस्रोदित्यास्त्वगष्टौदशसप्तत्रिंशत् ॥
॥ १० ॥ ३७ ॥ ४ ॥ अग्नेस्तनूरापतयेचतुष्कौतप्तायनीद्वेइन्द्रघोष
स्तिस्रोयुञ्जतेष्टौदेवस्यत्वाचतस्रोदेवस्यत्वापंचाविभूरासिचतस्रोज्यो
तिरासिषडुरुविष्णोतिस्रोदशात्रिचत्वारिंशत् ॥ १० ॥ ४३ ॥ ५ ॥
देवस्यत्वापडुपावीरासिपंचमाहिःषट्संते (तिसंते) तिस्रःसमुद्रंगच्छ

हविष्मतीर्द्धिकौह्देत्वापंचदेवस्यत्वाष्टावष्टौसप्तत्रिंशत् ॥ ८ ॥
॥३७॥६॥ वाचस्पतयऽउपयामगृहीतोसित्रिकावावायोयंवाद्धिकौया
वामेकातंप्रत्नथा चतस्रोयंवेनोयेदेवासस्त्रिकाविन्द्रायमूर्द्धानंद्धिकौय
स्तएकाप्राणाय तिस्रोमघवइन्द्राग्नीआगतमाघौमासश्चर्षणीधृतोवि
श्वेदेवासऽआगतेंद्रमरुत्वोमरुत्वंतं वृषभंमरुतांत्वौजसेसजोषाइंद्रम
रुत्वाँ२ ॥ इन्द्रमह२ ॥ इन्द्रोमहाँ२ ॥ इंद्रमेकेकोदुत्यमष्टौपं
चविंशतिरष्टाचत्वारिंशत् ॥ २५ ॥ ४८ ॥ ७ ॥ उपयामगृहीतो
सि ॥ आदित्येभ्यः पंचवाममद्यद्धेसुशर्मास्येकाबृहस्पतिसुतस्यद्धेह

रिरसिचतस्त्रः सामिन्द्रणाष्टौमाहिरेजतुदशमास्यः पंचकावातियुक्ष्वा
हींद्रमिदेकैकायस्मान्नद्धेऽग्नेपवस्वोत्तिष्ठन्नहश्रमुदुत्यमेकैकाजिघ्रद्धेवि
नइन्द्रवाचस्पतिंविश्वकर्मन्नेकैकाग्नयेत्वाचतस्त्रइहरतिस्तिस्त्रःपरमेष्ठी
दशत्रयोविंशतिस्त्रिषष्टिः ॥ २३ ॥ ६३ ॥ ८ ॥ देवसवितश्च
तस्त्रइंद्रस्यवज्रः पंचदेवस्याहंदशापयोतिस्त्रोवाजस्येममष्टावाग्नेरेका
क्षरेणषतेचतुष्कौसविताद्धेअष्टौचत्वारिंशत् ॥ ८ ॥ ४० ॥ ९ ॥
अपोदेवाश्चतस्त्रः सोमस्यत्विषिःपंचावेष्टाः सप्तसोमस्यत्वाचतस्त्र
इन्द्रवज्रःपंचस्योनासिचतस्त्रः सवित्रेकाश्विभ्यांचतस्त्रोष्टौचतुस्त्रिं

शत् ॥ ८ ॥ ३४ ॥ १० ॥ युंजानएकादशप्रतूर्त्तेठं षोडशदेवस्य
त्वादशापोदेवीर्द्वादशापोह्येकादशादितिष्ठा पंचाकूतिमष्टादशसप्तत्य
शीतिः ॥ ७ ॥ ८३ ॥ ११ ॥ इशानःसप्तदशादिवस्परिद्वादशस
मिधाग्निपंचदशापेतसप्तदशाऽसुन्वन्तंत्रयोदशयाओषधीःसप्तविंठंश
तिर्मामापोडशसप्तसप्तदशठंशतम् ॥ ७ ॥ ११७ ॥ १२ ॥ मयिगृह्णा
तिपंचदशध्रुवासिमधुवाताएकादशकौ सम्यक्स्रवंतिनवेमंमाषड
पांत्वेंकाऽयंपुरःपंचसप्ताष्टापंचाशत् ॥ ७ ॥ ५८ ॥ १३ ॥ ध्रुवाक्षि
तिः षट्सजूर्ऋतुभिर्मूर्द्धावयोर्द्विकाविन्द्राग्नी आयुर्मेषट्कावाशुस्त्रि

वृदेकाऽग्नेभोगोस्येकयाचतुष्कावष्टावेकत्रिंशत् ॥ ८ ॥ ३१ ॥
॥ १४ ॥ अग्नेजातान्पंचरश्मिनासत्यायचतस्रोराज्यस्ययंपुरःपं
चकावग्निर्मूर्द्धैकोनात्रिंशत् येनऋषयोष्टौतपश्चनवसप्तपंचषष्टिः ॥
॥ ७ ॥ ६५ ॥ १५ ॥ नमस्तेषोडशहिरण्यबाहवऽउष्णीषिणे
तक्षभ्योज्येष्ठायपंचकाः स्तुत्याय चतस्रःशंभवायैकापार्यायपंचद्रा
पेअंधसोविंशतिर्नवषट्षष्टिः ॥ ९ ॥ ६६ ॥ १६ ॥ अ
श्मन्नूर्जंदशनमस्तेपंचाग्निस्तिग्मेननवचक्षुषः पिताष्टावाशुः शिशानः
सप्तदशोदेनंक्रमध्वमग्निना पंचदशकौशुक्रज्योतिः सप्तमर्ठस्तनंत्र

योदशनवैकोनशतम् ॥ ९ ॥ ९९ ॥ १७ ॥ वाजः सप्तमूर्कंचतुष्काअ
श्माग्निस्त्रिकावर्ढ्शुः पंचैकाचतस्त्रोवाजायद्धेवाजस्यत्वष्टावृताषाट्त्र
योदशाग्निंयुनज्मिसप्तयदाकूताद्धात्रैहत्यायदशकौ त्रयोदशसप्तसप्त
तिः ॥ १३ ॥ ७७ ॥ १८ ॥ स्वाद्वींत्वैकादशदेवायज्ञंविंशतिःसुरावं
तंसप्तदशोदीरतां त्रयोदशाच्याजानुर्दशसोमोराजाष्टौसीसेनतंत्रं
षोडशसप्तपंचनवतिः ॥ ७ ॥ ९५ ॥ १९ ॥ क्षत्रस्ययोनिस्त्रयोदशय
द्देवादशाभ्यादधाम्यष्टौयाभूतानांचतस्त्रः समिद्धइंद्रएकादशायात्व
ष्टौसमिद्धोअग्निर्द्वादशाश्विनाहविस्त्रयोदशाश्विनातेजसैकादशनवनव

तिः ॥ ९ ॥ ९० ॥ २० ॥ इमम्मेसमिद्धोअग्निरेकादशकोवसन्तेन
ऋतुनापद्होतायक्षत्समिधाग्निंद्वादशाऽश्विनौ छागस्यसप्त देवंबर्हि
श्चतुर्दश षडेकषष्टिः ॥ ६ ॥ ६१ ॥ २१ ॥ तेजोसिपंचाग्नय
एकाहिंकारायद्वेतत्सवितुर्दश विभूर्मात्रैकाकायद्वेआब्रह्मंस्त्रयोदश
शेपादेकैकोनाविंशतिश्चतुस्त्रिंशत् ॥ १९ ॥ ३४ ॥ २२ ॥ हिरण्य
गर्भोयःप्रणतोद्विकौयुंजंत्यष्टौवायुश्चापंचप्राणायतिस्र उत्सक्थाद्वाद
शगायत्रीकस्त्वाषट्कौकःस्विदष्टौकास्विद्दशसुभूःस्वयम्भूस्तिस्र एका
दशपंचषष्टिः ॥ ११ ॥ ६५ ॥ २३ ॥ अश्वस्तूपरोधूम्रान्वसंताय

समुद्रायशिशुमारान्मयुःप्राजापत्योदशकाश्चत्वारश्चत्वारिंशत् ॥
॥ ४ ॥ ४० ॥ २४ ॥ शादंदद्भिर्नवैकैकाहिरण्यगर्भश्चतस्रआनो
दशमानोमित्रोयदश्वस्याष्टकौयत्तेषाडिमानुकंद्वेपंचदशसप्तचत्वारिं
शत् ॥ १५ ॥ ४७ ॥ २५ ॥ अग्निश्चपंचदशोच्चातएकादशद्वौ
षड्विंशतिः ॥ २ ॥ २६ ॥ २६ ॥ समास्त्वादशोर्ध्वअस्यपीवो
अन्नाद्वादशकावभित्वैकादशचत्वारःपंचचत्वारिंशत् ॥ ४ ॥ ४५ ॥
॥ २७ ॥ होतायक्षदेकादशदेवंबर्हिर्द्वादशपुनरप्येवंचत्वारःषट्चत्वा
रिंशत् ॥ ४ ॥ ४६ ॥ २८ ॥ समिद्धोअंजन्नेकादशयदक्रंदस्त्रयो

